## प्रमुख संस्कृत ग्रन्थ

| | | |
|---|---|---|
| **भुशुण्डिरामायणम् ( दो खण्डों में )** | | |
| | —डॉ० भगवतीप्रसाद सिंह तथा जनार्दन शास्त्री पाण्डेय | ६०.०० |
| **अलङ्कार प्रस्थान विमर्शः** | | |
| | —डॉ० लक्ष्मीनारायण सिंह | १२.५० |
| **चन्द्रालोक सुधा ( पंचम मयूख )** | | |
| | —विश्वम्भरनाथ त्रिपाठी | ४.०० |
| **भामिनीविलास** ( प्रास्ताविक अन्योक्ति विलास ) | | |
| | —जनार्दन शास्त्री पाण्डेय | ३.०० |
| **वेदचयनम्** | | |
| | —विश्वम्भरनाथ त्रिपाठी | ६.५० |
| **लघुसिद्धान्तकौमुदी** | | |
| | —डॉ० रामअवध पाण्डेय | १२.५० |
| **रचनानुवादकौमुदी** | | |
| | —डॉ० कपिलदेव द्विवेदी | ४.०० |
| **प्रौढ़रचनानुवादकौमुदी** | | |
| | —डॉ० कपिलदेव द्विवेदी | १२.५० |
| **संस्कृत व्याकरण** | | |
| | —डॉ० कपिलदेव द्विवेदी | १२.५० |
| **पालि-प्राकृत-अपभ्रंश संग्रहः** | | |
| | —डॉ० रामअवध पाण्डेय | १२.५० |

—

महाकविविशाखदत्तप्रणीतं

# मुद्राराक्षसम्

रमानाम्न्या संस्कृतटीकया राष्ट्रभाषानुवादेन
टिप्पण्या भावसंवलितया विस्तृत-
भूमिकया च सनाथीकृतम्

टीकादिप्रणेता सम्पादकश्च

**डॉ० रमाशङ्कर त्रिपाठी**

व्याकरणाचार्यः एम० ए०, पी-एच० डी०,
संस्कृत-पालि-विभागः
काशीहिन्दूविश्वविद्यालयः
वाराणसी—५

**विश्वविद्यालय प्रकाशन, वाराणसी**

## समर्पणम्

भट्टाचार्यबुधं महामतिमतामग्रेसरैर्वन्दितं
भक्त्याऽहं प्रणिपत्य नम्रशिरसा सिद्धेश्वराख्यं गुरुम् ।
मुद्राराक्षसनामनाटकवरं सम्यक्समर्प्याऽधुना
हस्ते तस्य मुदं वहामि सततं श्रीशङ्करानुग्रहात् ॥

प्रथमोऽङ्कः

धन्या केयं स्थिता ते शिरसि शशिकला किन्नु नामैतदस्याः
नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुः
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥१॥

---

श्रीविश्वेशपदारविन्दयुगलं निध्याय भक्त्या तथा
भट्टाचार्यबुधं प्रणम्य मनसा सिद्धेश्वराख्यं गुरुम् ।
मुद्राराक्षसनाटकवरस्योत्कृष्टटीकां स्फुटाम् ,
गूढार्थस्य निदर्शिकां रचयति श्रीमान् रमाशङ्करः ॥

धन्या केयमिति—

**अन्वयः**—धन्या, इयम्, का, ते, शिरसि, स्थिता ? – शशिकला । किम्, एतत्, अस्याः, नाम नु ?—(आम्, एतत्), अस्याः, नाम, एव, (अस्ति) । तत्, एतत्, ते, परिचितम्, अपि, (आसीत्, तर्हि), कस्य हेतोः, विस्मृतम् ? नारीम्, पृच्छामि, इन्दुम्, न; यदि, इन्दुः, प्रमाणम्, नः (तदा), विजया, कथयतु । इति, देव्याः, सुरसरितम्, निह्नोतुम्, इच्छोः, विभोः, शाठ्यम्, वः, अव्यात् ।

**शब्दार्थः**—धन्या = परमसौभाग्यवती, इयम् = यह, का = कौन सी स्त्री, ते = तुम्हारे (आपके), शिरसि = मस्तक पर, स्थिता = बैठी है ?—शशिकला = शशिकला (चन्द्रमा की कला) । किम् = क्या, एतत् = यह, अस्याः = इसका, नाम नु = नाम ही (है) ?—(आम् = हाँ, एतत् = यह), अस्याः = इसका, नाम = नाम, एव = ही, (अस्ति = है) । तत् = अत्यन्त प्रसिद्ध, एतत् = यह (नाम), ते = तुम्हें, परिचितम् = परिचित, अपि = भी, (आसीत् = था, तर्हि = तो), कस्य = किस, हेतोः = कारण से, विस्मृतम् = भूल गया ? नारीम् = (मस्तक पर स्थित) स्त्री को, पृच्छामि = पूछ रही हूँ, इन्दुम् = चन्द्रमा को, न = नहीं; यदि = यदि, इन्दुः = चन्द्रमा (अर्थात् चन्द्रमा के विषय में कहा गया मेरा वचन), प्रमाणम् = विश्वासजनक, न = नहीं (है); (तदा = तो), विजया = विजया (नाम की तुम्हारी सखी), कथयतु = कहे (अर्थात् यथार्थ उत्तर दे) । इति = इस प्रकार, देव्याः = देवी (पार्वती) से, सुरसरितम् = गङ्गा को, निह्नोतुम् = छिपाने की, इच्छोः = इच्छा करने वाले, विभोः = भगवान् शङ्कर की, शाठ्यम् = चतुरता (धूर्तता), वः = आप (सामाजिकों) की, अव्यात् = रक्षा करे ॥१॥

धन्या केयमिति—

**टीका**—तत्र श्रीमान् विशाखदत्तनामा महाकविः प्रारिप्सितस्य नाटकस्य निर्विघ्नसमाप्त्यर्थं स्वेष्टदेवतागुणसङ्कीर्तनपुरस्सरमाशीर्वचनरूपं मङ्गलं नान्द्योपस्थापयन्

## प्रथम अङ्क

### प्रस्तावना

अर्थः—(देवी पार्वती—) परमसौभाग्यवती यह कौन-सी स्त्री आपके मस्तक पर बैठी है? (भगवान् शिव—) शशिकला (चन्द्रमा की कला)। (पार्वती—) क्या यह इसका नाम ही है? (शिव—) (हाँ, यह) इसका नाम ही है, अत्यन्त प्रसिद्ध यह नाम तुम्हें परिचित भी था, तो (आज) किस कारण से भूल गया? (पार्वती—) (मस्तक पर स्थित) स्त्री को पूछ रही हूँ, चन्द्रमा को नहीं। (शिव—) यदि चन्द्रमा (अर्थात् चन्द्रमा के विषय में कहा गया मेरा वचन) विश्वासजनक नहीं है तो विजया ही यथार्थ उत्तर देगी। इस प्रकार देवी पार्वती से गङ्गा को छिपाने की इच्छा करनेवाले भगवान् शङ्कर की चतुरता (धूर्तता) आप (सामाजिकों) की रक्षा करे ॥१॥

---

नाटकीयं वस्तु ध्वनयति धन्येत्यादिना। यदा भगवान् शिवो गङ्गां शिरसि कृत्वा प्रथमं गृहमागच्छत् तदा तां विलोक्य सेर्ष्या पार्वती तम् अपृच्छत्—'धन्या = सौभाग्यवती प्रलोभिका वा, इयम् = पुरो दृश्यमाना, का = का स्त्री, ते = जगद्गुरोरपि तवेत्यर्थः, शिरसि = मस्तके जटाजूटनिचये वा, स्थिता = वर्तमाना अस्तीति शेषः। अत्र व्यतिरेक-लक्षणया धन्याशब्दोऽधन्या वाचकोऽपि। पूज्यस्य भर्तुः या शिरसि स्थिता सा अधन्या अश्लाघ्या एव। कथमेतादृशायाः स्त्रियः वश्योऽसीति व्यज्यते। शिवस्तु इयं तव सपत्नी इति वक्तुं नैच्छत्। अतः सव्याजं ललाटे स्थितां चन्द्रमसः कलामुद्दिश्य प्रत्युवाच—शशिकलेति—शशिनः = चन्द्रस्य कला = रेखा इयमस्तीति शेषः। उभयत्र स्त्रीलिङ्गस्य सामान्यादुत्तरसङ्गतिः। शिवस्योत्तरं श्रुत्वा अस्याः रमण्याः नामैव 'शशिकला' इत्यव-गच्छन्ती देवी निश्चयाय पुनः देवमपृच्छत्—किम् एतत् = त्वदुक्तं शशिकलेति वचनम्, अस्याः = शिरस्थायाः रमण्याः, नाम नु = अभिधानमेव? अस्याः स्त्रियः एतत् शशि-कलेति नाम किमिति तात्पर्यम्। प्रतारयन् देवः स्वीकृतिपूर्वकम् आह—अस्याः = मच्छिरसि वर्तमानायाः चन्द्रकलायाः, 'शशिकला' इति नाम = संज्ञा, एवेति निश्चये, अस्तीति शेषः। तत् = सर्वजनविदितम्, एतत् = नाम, शशिकलेति नामेति भावः, ते = तव, अनुक्ते कर्तरि षष्ठी, परिचितम् = सुविदितम्, अपि, आसीत्तर्हीति शेषः, कस्य हेतोः = केन कारणेनेत्यर्थः, 'षष्ठी हेतुप्रयोगे' इति षष्ठी; विस्मृतम् = अज्ञातमिव जात-मित्यर्थः। परिचितमपि नाम अत्र त्वया अपरिचितमिव पृच्छ्यते, आश्चर्यमेतदिति गलितार्थः। एतावता देवी मेने प्रश्नस्य विषयं प्रति देवस्य भ्रमो जातः अथवा व्याजेन युवतिं निह्नुते इति शिवस्य कैतवं ज्ञात्वा देवी आह—नारीम् = शिरस्थां स्त्रियम्, पृच्छामि = ज्ञातुमभिलषामि, इन्दुम् = चन्द्रम्, न = न ज्ञातुमिच्छामि। सर्वदा परि-चितमिन्दुन्तु जानाम्येव, अतो न तमधिकृत्य मदीयः प्रश्नः। अद्य तव शिरस्थां काञ्चित्

अपि च ।

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् ।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥२॥

नवीनां नारीं पश्यामि, अतः तामधिकृत्य जिज्ञासया प्रश्नः इति भावः । पुनः शिवः छलेन अन्यथा उत्तरयति—यदि इन्दुः = इन्दुविषयकं मदीयं कथनम् , मम शिरसि स्थितस्य इन्दोः शशिकलेति नामेत्यर्थः, प्रमाणम् = श्रद्धास्पदम् , न = नास्ति, तदा = तर्हि, विजया = तव स्निग्धा विश्वासास्पदीभूता सखी एव, कथयतु = ब्रवीतु शशिकलेति इन्दोर्नाम न वा । इति = इत्थम् , देव्याः = पूजनीयायाः पार्वत्याः, अपादानत्वविवक्षया अत्र पञ्चमी, सुरसरितम् = देवनदीं गङ्गाम् , निह्नोतुम् = गोप्तुम् , इच्छोः = अभिलाषिणः, विभोः = व्यापनशीलस्य शिवस्य, शाठ्यम् = कैतवं चातुर्यं वा, वः = युष्मान् सामाजिकान् , अव्यात् = रक्षतु । एतेन विभोश्चाणक्यस्य शाठ्यं चन्द्रगुप्तं विपत्सु ररक्ष इति अत्र नाटकीयं वस्तु व्यज्यते इति प्राचीनाः ।

**टिप्पणी—परिचितम्** = जाना-पहचाना, ज्ञात, परि + $\sqrt{}$चि + क्त + विभक्तिकार्यम् ।

**निह्नोतुम्** = छिपाने के लिए, नि + $\sqrt{}$ह्नु + तुमुन् + विभक्तिकार्यम् ।

इस श्लोक में व्याजोक्ति नामक अलङ्कार तथा स्रग्धरा छन्द है । छन्द का लक्षण —

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥१॥

**पादस्येति—**

**अन्वयः—**पादस्य, स्वैरपातैः, आविर्भवन्तीम् , अवनेः, अवनतिम् , रक्षतः; सर्वलोकातिगानाम् , दोष्णाम् , मुहुः, सङ्कोचेन, एव, अभिनयतः; दाहभीतेः, लक्ष्येषु, ज्वलनकणमुचम् , उग्राम् , दृष्टिम् , न, बध्नतः, त्रिपुरविजयिनः, आधारानुरोधात् , इति, दुःखनृत्यम् , वः, पातु ॥२॥

**शब्दार्थः—**पादस्य = पैर के, स्वैरपातैः = धीरे-धीरे चलाने से, ( सभल कर इधर-उधर चलाने से ), आविर्भवन्तीम् = ( पैर के प्रबल धक्के से ) होनेवाली, अवनेः = पृथिवी की, अवनतिम् = अधोगति को, ( नीचे की ओर धसान को, ) रक्षतः = बचाते हुए; सर्वलोकातिगानाम् = सभी लोकों तक पहुँचने वाली, दोष्णाम् = भुजाओं को, मुहुः = बार-बार, सङ्कोचेन = सिकोड़ कर, एव = ही, अभिनयतः = नाचने वाले; दाहभीतेः = जल जाने के भय से, लक्ष्येषु = देखी जानेवाली वस्तुओं में, ज्वलनकणमुचम् = आग के कणों को उत्पन्न करनेवाली, उग्राम् = प्रचण्ड, दृष्टिम् = ( तीसरी ) आँख को, न = न, बध्नतः = स्थिर करनेवाले, त्रिपुरविजयिनः = त्रिपुरान्तक शङ्कर का, आधारानुरोधात् = ( पृथिवी और त्रिलोकी आदि ) आधारों के कारण, इति = इस प्रकार

और भी—

पैर (पैरों) के धीरे-धीरे चलाने में (जोर के धक्के के कारण) होनेवाली पृथ्वी की अधोगति को बचाते हुए; सभी लोकों तक पहुँचनेवाली भुजाओं को बार बार सिकोड़ कर ही नाचनेवाले; जलजाने के भय से, देखी जानेवाली वस्तुओं में आग के कणों को उत्पन्न करनेवाली प्रचण्ड (तीसरी) आँख को न स्थिर करनेवाले त्रिपुरान्तक शङ्कर का (पृथिवी और त्रिलोकी आदि) आधारों के कारण इस प्रकार का कष्टपूर्वक किया गया नृत्य (नाच) आप सब की रक्षा करे ॥२॥

---

श०. दुःखनृत्यम् = कष्टपूर्वक किया गया नृत्य (नाच), वः = आप सब की, पातु = रक्षा करे ॥

टीका—द्वितीयं नान्दीपद्यमवतारयति कविः **पादस्येति** । पादस्य = नृत्यसंलग्नयोश्चरणयोरित्यर्थः, अत्र 'पादस्य' जात्या एकवचनम्, स्वैरपातैः = मन्दविक्षेपैः ('मन्दस्वच्छन्दयोः स्वैरः' इत्यमरः) श्लोकस्थान्यचरणानुरोधात् 'स्वैरपातैः = स्वच्छन्दसञ्चालनैः', इति व्याख्या न सङ्गता, आविर्भवन्तीम् = उत्पत्स्यमानाम्, (वर्तमानसामीप्येऽत्र लट्), अवनेः = पृथिव्याः पादाधस्तलस्थितायाः भुवः इत्यर्थः अवनतिम् = अधोगमनम्, रक्षतः = परिहरतः, अवनिभङ्गभीत्या शनैः पादौ क्षिपतः इत्यर्थः, सर्वलोकातिगानाम्—सर्वान् = निखिलान् लोकान् = भुवनान्, ('लोकस्तु भुवने जने' इत्यमरः), ये अतिगच्छन्ति = अतीत्य वर्तन्ते तादृशानाम्, त्रैलोक्यव्यापिनामित्यर्थः, दोष्णाम् = बाहूनाम्, ('भुजबाहू प्रवेष्टो दोः' इत्यमरः), मुहुः = वारम्वारम्, सङ्कोचेन = क्रोडीकरणेन, अतिविस्तृतानां भुजानामाघातेन लोकाः विनष्टाः मा भूवन्निति तत्प्रतिसरः मुहुर्मुहुः निरुद्धः इति भावः, एवेति निश्चये, अभिनयतः = अङ्गविक्षेपं कुर्वतः ('अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ' इत्यमरः); दाहभीतेः—दाहात् = दहनात् भीतिः = भयः तस्याः, हेतौ पञ्चमी, वस्तूनि दग्धानि मा भूवन्निति भयात्, लक्ष्येषु = दृष्टिविषयेषु, दृष्टिपदमागतेषु वस्तुषु, ज्वलनकणमुचम्—ज्वलनस्य = अग्नेः कणान् = स्फुलिङ्गान् मुञ्चति = विकिरति तथाभूताम्, अग्निस्फुलिङ्गवर्षिणीमित्यर्थः, उग्राम् = घोराम्, दृष्टिम् = नेत्रम्, ललाटलोचनमित्यर्थः, न बध्नतः = न स्थिरीकुर्वतः, त्रिपुरविजयिनः—पुरारेः; शिवस्य, आधारानुरोधात्—आधारस्य = नृत्यकार्याश्रयस्य पृथिव्यादेः ब्रह्माण्डरूपस्य वा अनुरोधाद् = पृथिव्यादीनां यथा-क्रमम् अधोगमनसंहरणदाहाः मा भूवन्निति अनुक्रोशात्, इति = इत्थम्, दुःखनृत्यम्—दुःखयतीति दुःखम् = दुःखपूर्णम् नृत्यम् = नर्तनम्, ताण्डवमित्यर्थः, स्वच्छन्दतायाः विश्रब्धतायाश्चाभावात् नृत्ये दुःखपूर्णतेति भावार्थः, वः = युष्मान् सामाजिकान्, पातु = रक्षतु, इत्याशीः सामाजिकेभ्यः । क्वचित् 'नृत्तम्' इति पाठः । वस्तुतः स एव समीचीनः । अत्रविपयभङ्ग्या किमप्यनिर्वचनीयं कथावस्त्वपि सूच्यते इत्यपि सुधीभिर्विभाव्यम् ॥२॥

**टिप्पणी—आविर्भवन्तीम्**—होनेवाली आविस् + √ भू + शतृ + स्त्रीलिङ्गे विभक्तिकार्यम् ।

( नान्द्यन्ते )

**सूत्रधारः**—अलमतिप्रसङ्गेन । आज्ञापितोऽस्मि परिषदा यथाद्य त्वया सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेर्विशाखदत्तस्य कृतिरभिनवं मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति । तत् सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि सुमहान् परितोषः प्रादुर्भवति । कुतः—

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥ ३ ॥

---

इस श्लोक में कुछ लोग अतिशयोक्ति अलङ्कार मानते हैं । इसमें प्रयुक्त छन्द का नाम है—स्रग्धरा । छन्द का लक्षण—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ २ ॥

**शब्दार्थः**—नान्द्यन्ते—नान्दी = मङ्गलाचरण, अन्ते = समाप्ति पर = मङ्गलाचरण की समाप्ति पर । सूत्रधारः = प्रधान नट, मण्डलीका नेता । अलम् = पर्याप्त, बस, बहुत हो चुका; अतिप्रसङ्गेन = अधिक विस्तार से । परिषदा = सभा के द्वारा । काव्यविशेषवेदिन्याम् = काव्य की उत्कृष्टता को जानने वाली, परिषदि = सभामें, प्रयुञ्जानस्य = प्रयोग करने वाले, अभिनय करनेवाले । परितोषः = प्रसन्नता ।

**टीका**—नान्द्यन्ते—नन्दयति = आनन्दयति जनानिति नान्दी, नन्दन्ति देवताः अनेन वा नान्दी = नाटकादौ प्रथमं मङ्गलार्थं विहितं पद्यं नान्दीत्युच्यते । उक्तञ्चापि साहित्यदर्पणे—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देव-द्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥

केश्चिन्नान्द्यां पदनियमो नाद्रियते । अतोऽत्र पदनियमः न स्वीकृतः । अथवा पदशब्दः पादवचनः । एवं पद्यद्वयेन अष्टपदा नान्दी अत्र विहितेति बोध्यम् । सूत्रधारः—सूत्रम् = नाटकप्रयोगानुष्ठानम धारयतीति सूत्रधारः = प्रधाननटः । उक्तं साहित्यदर्पणे सूत्रधारलक्षणम्—

नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।
सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥

**अलम्** = पर्याप्तम्, प्रयोजनं नास्तीत्यर्थः, अतिप्रसङ्गेन = अधिकविस्तारेण, बहुनान्दीपाठेनेत्यर्थः । परिषदा—परि = समन्तात् सीदन्ति अस्यामिति परिषत् तया, सभास्थैः जनैरित्यर्थः । मुद्राराक्षसम्—मुद्रया = अङ्गुलिमुद्रया परिगृहीतः = वशीकृतः राक्षसः यत्रेति ( मध्यमपदलोपिसमासः ) तदधिकृत्य कृतः ग्रन्थः इति मुद्राराक्षसम्, ग्रन्थत्वात्क्लीबत्वम् । काव्यविशेषवेदिन्याम्—काव्यस्य विशेषम् = वैशिष्ट्यम्, उत्कर्षमित्यर्थः या वेत्ति = जानीते तस्याम्, परिषदि = सभायाम्, प्रयुञ्जानस्य = प्रयोक्तु-

( मङ्गलाचरण की समाप्ति पर )

**सूत्रधारः**—( मङ्गलाचरण का ) अधिक विस्तार बन्द करो। सभा में स्थित व्यक्तियों के द्वारा मुझे आज्ञा मिली है कि—"आज तुम्हारे द्वारा सामन्त वटेश्वरदत्त के पौत्र, 'महाराज' पद को धारण करने वाले ( अर्थात् महाराज कहे जाने वाले ) पृथु के पुत्र कवि विशाखदत्त की रचना 'मुद्राराक्षस' नामक नवीन नाटक का अभिनय होना चाहिए।" तो वस्तुतः काव्य की उत्कृष्टता को जानने वाली इस सभा में अभिनय करने वाले मेरे भी ( हृदय में ) महान् प्रसन्नता का प्रादुर्भाव हो रहा है। क्योंकि—

( खेती के काम में ) अनभिज्ञ भी ( किसान की ) उत्तम खेत में पड़ी हुई ( अर्थात् बोई हुई ) खेती ( बीज ) बढ़ती है। ( क्योंकि ) धानका गुच्छे-गुच्छे के रूप में सघन होना बीज बोनेवाले के गुण की नहीं अपेक्षा करता है ( अपितु स्वयं ही खेत की उर्वरा शक्ति के कारण बढ़ता है ) ॥ ३ ॥

---

भाणस्य, परितोषः = प्रसन्नता।

**टिप्पणी**—प्रसङ्गेन—विस्तार से. प्र + √ सञ्ज् + घञ् + विभक्तिकार्यम्।

**आज्ञापितः** = आज्ञा दिया गया, आ + √ज्ञा + णिच् + क्त + विभक्तिकार्यम्।

**परिषदा**—सभा के द्वारा, परि + √सद् + क्विप् + विभक्तिकार्यम्।

**महाराजपदभाक्**—इससे ज्ञात होता है कि 'पृथु' को किसी तत्कालीन सम्राट् के द्वारा 'महाराज' की पदवी दी गयी थी। वे स्वयं सम्राट् नहीं थे जैसा कि कुछ लोगों ने लिखा है।

**चीयते बालिशस्येति**—

**अन्वयः**—बालिशस्य, अपि, ( कृषकस्य ), सत्क्षेत्रपतिता, कृषिः, चीयते; यतः, शालेः, स्तम्बकरिता, वप्तुः, गुणम्, न, अपेक्षते ॥ ३ ॥

**शब्दार्थः**—बालिशस्य = ( खेती के काम में ) अनभिज्ञ, अपि = भी, कृषकस्य = किसान की, सत्क्षेत्रपतिता = उत्तम खेत में पड़ी हुई ( बोई हुई ), कृषिः = खेती ( बीज ), चीयते बढ़ती है; ( यतः = क्योंकि ), शालेः = धान का, स्तम्बकरिता = गुच्छे-गुच्छे के रूप में सघन होना, वप्तुः = ( बीज ) बोनेवाले के, गुणम् = गुण को (की), न = नहीं, अपेक्षते = अपेक्षा करता है ॥ ३ ॥

**टीका**—**चीयते बालिशस्येति**। बालिशस्य = (कृषिकार्ये)अनभिज्ञस्य, अपि, कृषकस्य= कर्षकस्य, सत्क्षेत्रपतिता—सत्क्षेत्रे = सुक्षेत्रे, उर्वरायां भुवीत्यर्थः, पतिता = निक्षिप्ता, उप्तेति यावत्, कृषिः = लक्षणया तत्सम्बन्धि बीजमित्यर्थः, चीयते = वर्द्धते, सुफलं ददातीत्यर्थः; यतः शालेः = उत्तमस्य धान्यस्य, स्तम्बकरिता—स्तम्बम् = गुच्छम् करोतीति स्तम्बकरिः = व्रीहिः तस्य भावः स्तम्बकरिता = निबिडीभवनशीलत्वा, वप्तुः = वपनकर्तुः, गुणम् = दक्षताम्, न अपेक्षते = न आकाङ्क्षते ॥ ३ ॥

**टिप्पणी**—**बालिशस्य** = अनभिज्ञ, यह कृषकस्य का विशेषण है। बालिः शेते इस विग्रह में 'ड' प्रत्यय तथा 'तत्पुरुषे कृति बहुलम्' पा० ६।३।१४ से [illegible]

तद्यावदिदानीं गृहं गत्वा गृहजनेन सह सङ्गीतकमनुतिष्ठामि। (परिक्रम्यावलोक्य च) इमे नो गृहाः। तद्यावत्प्रविशामि। (नाट्येन प्रविश्यावलोक्य च) अये किमिदमस्मद्गृहेषु महोत्सव इव। स्वस्वकर्मण्यधिकतरमभियुक्तः परिजनः। तथा हि

वहति जलमियं पिनष्टि गन्धान्
इयमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियं च पातकाले
मुहुरनुयाति कलेन हुंकृतेन॥ ४॥

भवतु कुटुम्बिनीमाहूय पृच्छामि। (नेपथ्याभिमुखमवलोक्य)

गुणवत्युपायनिलये स्थितिहेतोः साधिके त्रिवर्गस्य।
मद्भवननीतिविद्ये कार्याचार्ये द्रुतमुपेहि॥ ५॥

होने पर र तथा ल में अभेद मानकर बालिश शब्द बनता है। 'बालिशस्यापि' ऐसा कहकर सूत्रधार ने अपनी तुलना मूर्ख किसान से की है। विनयप्रदर्शन का यह एक तरीका है। इस प्रकार के कथन में अपनी प्रशंसा भी छिपी रहती है।

**सत्क्षेत्रपतिता**—सुन्दर खेत में पड़ी हुई, यह दृष्टान्त परिषद् की प्रशंसा के लिए दिया गया है।

**स्तम्बकरिता** = गुच्छे-गुच्छे के रूप में सघन होना, स्तम्ब + √कृ + क्त (भावे) + टाप्।

इस श्लोक में अर्थान्तरन्यास अलंकार तथा पथ्यावक्त्र छन्द है। छन्द का लक्षण—

युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्तितम्॥३॥

**शब्दार्थः**—गृहजनेन सह = परिवार के सदस्यों के साथ, सङ्गीतकम् = नृत्य-गीत-वाद्य को, अनुतिष्ठामि = करूँगा, अभियुक्तः = तल्लीन॥

**टीका**—गृहजनेन सह = परिचरवर्गेण सह, सङ्गीतकम् = गीतवाद्यादिकम्, नृत्यगीतवाद्यं सङ्गीतकमुच्यते, अनुतिष्ठामि = प्रवर्तयामि। यावद्योगे लट्। अभियुक्तः = तल्लीनः॥

**टिप्पणी**—**सङ्गीतकम्**—सम् + √गै + क्त भावे सङ्गीतम्, सङ्गीतमेव सङ्गीतकम् स्वार्थे कन्। नृत्य, गीत तथा वाद्य को सङ्गीत कहते हैं—गीतं वाद्यं नर्तनञ्च त्रयं सङ्गीतमुच्यते।

**अभियुक्तः**—अभि + √युज् + क्त कर्तरि + विभक्तिकार्यम्।

**वहति जलमिति**—

**अन्वयः**—इयम्, जलम्, वहति; इयम्, गन्धान्, पिनष्टि; इयम्, विचित्राः, स्रजः, उद्ग्रथते; इयम्, च, पातकाले, मुहुः, कलेन, हुँकृतेन, इदम्, मुशलम्, अनुयाति॥४॥

**शब्दार्थः**—इयम् = यह स्त्री, जलम् = जल को, वहति = ला रही है; इयम् = यह, गन्धान् = मसालों को, पिनष्टि = पीस रही है; इयम् = यह, विचित्राः = रंग-बिरंगी,

तो (नाटक आरम्भ करने के लिए) अब घर जाकर परिवार के लोगों के साथ सङ्गीत का आयोजन करूँगा। (चारों तरफ घूमकर तथा देखकर) यह हमारा घर है। तो, भीतर जाता हूँ। (अभिनय के साथ प्रवेश करके और देखकर) अरे यह क्या! हमारे घर में तो बड़ी तैयारी (उत्सव) सी दिखलाई पड़ रही है। सभी नौकर-चाकर अपने-अपने कार्यों में अत्यन्त तल्लीन हैं। जैसे कि-

यह एक स्त्री जल ला रही है, यह (दूसरी) सुगन्धित मसालों को पीस रही है, यह (तीसरी) रंग-बिरंगी मालाओं को गूँथ रही है, यह (चौथी) भी (मूशल के) गिरने के समय बार-बार मधुर 'हुँ'कार से इस मुसल का अनुसरण कर रही है ॥४॥

अच्छा, पत्नी को बुलाकर पूछता हूँ। (पर्दा की ओर देखकर)

**पहला अर्थ**

(१) सूत्रधार अपनी पत्नी नटी को बुला रहा है—

हे देवा, दाक्षिण्य आदि गुणोंवाली! (गृहस्थी को चलानेवाले) उपायों का आश्रय। (गृहस्थी में व्यक्ति के) निवास करने के कारणभूत धर्म, अर्थ और काम को सिद्ध करनेवाली! कर्तव्यों का उपदेश करनेवाली! हमारे घर की नीतिविद्यास्वरूप! (मेरी पत्नी!) शीघ्र आओ ॥५॥

(२) चाणक्य कूटनीति को बुला रहा है—

सन्धि, विग्रह, यान, आसन, द्वैधीभाव तथा संश्रय इन छः गुणोंवाली! साम, दाम, भेद और दण्ड रूप चार उपायोंवाली! (देश की) स्थिरता में कारणभूत क्षय, स्थान तथा वृद्धि रूप त्रिवर्ग को सिद्ध करनेवाली! कर्तव्यों का उपदेश देनेवाली! हमारे घर की (परम्पराप्राप्त) हे नीतिविद्ये! शीघ्र आओ ॥५॥

---

स्रजः = मालाओं को, उद्ग्रथते = गूँथ रही है; इयम् = यह, च = भी, पातकाले = (मुशलके) गिरने के समय में, मुहुः = बार-बार, कलेन = मधुर, हुँकृतेन = 'हुँ'कार से, इदम् = इस, मुसलम् = मुसल का, अनुयाति = अनुसरण कर रही है ॥४॥

**टीका—वहति जलमिति।** इयम् = एका स्त्री, जलम् = सलिलम्, वहति = आनयति, इयम् = अपरा, गन्धान् = गन्धद्रव्याणि, पिनष्टि = चूर्णयति; इयम् = अन्या, विचित्राः = नानावर्णाः, स्रजः = मालिकाः, उद्ग्रथते = गुम्फति, इयम् = इतरा, च = अपि, पातकाले = मुशलस्य उलूखले पतनकाले इत्यर्थः, मुहुः = बारम्बारम्, कलेन = मधुराव्यक्तेन, हुँकृतेन = हुँकारेण, 'हुँ' इति शब्देन, इदम् = दृश्यमानम्, मुशलम् = अयोग्रम्, ('अयोग्रो मुसलः' इत्यमरः), अनुयाति = अनुगच्छति, मुशलं पातयति हुँ शब्दञ्च समकालमेव करोतीति भावः ॥४॥

**टिप्पणी—अनुयाति** = अनुसरण कर रही है। स्त्रियाँ जिस समय मुशल को ओखली में गिराती हैं उस समय वे 'हुँ' इस शब्द को मुँह से निकालती रहती हैं। इससे श्रम दूर होता है। कपड़ा धोनेवाले भी ऐसा ही करते हैं।

इस श्लोक में स्वभावोक्ति अलंकार तथा पुष्पिताग्रा छन्द है। छन्द का लक्षण—

( प्रविश्य )

नटी— आर्य इयमस्मि ! आज्ञानियोगेन मामार्योऽनुगृह्णातु ! ( अज्ज ! इअम्हि अज्जणिओएण मं अज्जो अणुगेह्णदु । )

अयुजि नयुगरेफतो यकारो युजि च
नजौ जरगाश्च पुष्पिताग्रा ॥४॥

शब्दार्थः— कुटुम्बिनीम् = पत्नी को, आहूय = बुलाकर, नेपथ्याभिमुखम् = पर्दे की ओर, वेशरचना के स्थान की ओर ।

टीका—कुटुम्बिनीम्—कुटुम्बम् = पोष्यवर्गम् अस्ति अस्याः इति कुटुम्बिनी ताम् पत्नीम् , आहूय = आकार्य । नेपथ्याभिमुखम्—नेपथ्यस्य = वेशरचनास्थानस्य अभिमुखम् = सम्मुखम् ॥

गुणवत्युपायेति—

अन्वयः— हे गुणवति, उपायनिलये, स्थितिहेतोः, त्रिवर्गस्य, साधिके, कार्याचार्ये, मद्भवननीतिविद्ये, द्रुतम् , उपेहि ॥५॥

शब्दार्थः— हे गुणवति = हे गुणशालिनी (पक्षान्तरमें—सन्धिविग्रह आदि गुणोंवाली), उपायनिलये = (गृहस्थी को चलानेवाले) उपायों का आश्रय (पक्षा०—साम दाम आदि उपायोंवाली), स्थितिहेतोः = (गृहस्थी में व्यक्ति के) निवास करने के कारणभूत, त्रिवर्गस्य = धर्म, अर्थ और काम को, (पक्षा०—क्षय, स्थान और वृद्धि को), साधिके = सिद्ध करनेवाली, कार्याचार्ये = कर्तव्यों का उपदेश करनेवाली, मद्भवननीतिविद्ये = हमारे घर की नीतिविद्यास्वरूप, द्रुतम् = शीघ्र, उपेहि = आओ ॥५॥

टीका - सूत्रधारः नटीं तस्याः गुणस्तुत्या आह्वयति— गुणवतीत्यादिना । हे गुणवति = हे दयादाक्षिण्यादिगुणविभूषिते, उपायनिलये उपायानाम् = गृहसञ्चालनहेतूनाम् , निलये = आश्रये, स्थितिहेतोः—स्थितौ = गृहस्थाश्रमनिवासे वा स्थितेः = गृहस्थाश्रमनिवासस्य हेतोः = कारणभूतस्य, त्रिवर्गस्य = धर्मार्थकामरूपस्य पुरुषार्थस्य, साधिके = निर्वाहयित्रि, गृहस्थाश्रमे निवासस्य फलं विद्यते त्रिवर्गसाधनं यद्येतन्न सम्पन्नं तर्हि वृथा तत्र निवसनं गतम् , कार्याचार्ये—कार्याणाम् = कर्तव्यानाम् , आचार्ये = पण्डिते उपदेष्ट्रि वा, मद्भवनेति—मद्भवनस्य = मद्गृहस्य, नीतिविद्ये = नयशास्त्रस्वरूपे वा मद्भवनस्य नीतौ नयने सञ्चालने इत्यर्थः विद्ये = साक्षात् सरस्वति, द्रुतम् = झटिति, उपेहि = आगच्छ ।

अत्र श्लोके भङ्ग्यन्तरेण नीतिविद्यापि आहूतेत्यपि बोध्यम् । तत्र तु एवं व्याख्येयम्—

हे गुणवति = हे सन्धि-विग्रह-यान-आसन-द्वैधीभाव-संश्रयेति षड्गुणसम्पन्ने, उपायनिलये—उपायानाम् = साम-दाम-भेद-दण्डरूपाणाम् उपायानाम् निलये = आश्रयस्थले, स्थितिहेतोः—स्थितौ = राष्ट्ररक्षणे हेतोः = कारणीभूतस्य, त्रिवर्गस्य = क्षय-स्थान-वृद्धिरूपस्य, साधिके = सम्पादयित्रि, कार्याचार्ये = समीचीनकर्तव्योपदेशिके, मद्भवनेति—मम भवनस्य = गृहस्य, पूर्वजैः एव अर्जिता न तु कुतश्चिद् गृहीतेतिभावः,

(प्रवेश करके)

**नटी**—आदरणीय पति जी, यह मैं हूँ। आप आज्ञा देकर मुझे कृतार्थ करें।

नीतिनिपुणे = नयविदे, अनेन नीतौ स्वाभाविकी पटुता ध्वनिता. द्रुतम् = शीघ्रम्, उपैहि = आगच्छ, मयि संक्रान्ता भवेत्यर्थः ॥५॥

अत्र विजिगीषुणा चन्द्रगुप्तेन शरदागमः प्रार्थ्यते इति केचित्। पञ्चाङ्गमर्शः सन्धौ सङ्कल्पभावानुपेक्षणीय एव ॥५॥

**टिप्पणी**—**गुणवति**—राजनीति में छः गुण कहे गये हैं (१) सन्धि, (२) विग्रह, (३) यान, (४) आसन, (५) द्वैध और (६) आश्रय।

**उपायनिलये**—राजनीति में उपाय ४ होते हैं (१) साम, (२) दाम, (३) भेद और (४) दण्ड।

**त्रिवर्गस्य**—नीतिशास्त्र में क्षय, स्थान तथा वृद्धि को त्रिवर्ग कहा गया है। नीतिशास्त्र के अतिरिक्त त्रिवर्ग का अर्थ होता है—धर्म, अर्थ तथा काम।

**उपायनिलये**—उपायाः निलीयन्ते अस्याम् इति उपाय + नि + √ली + अच् (अधिकरणे) + स्त्रीलिङ्गे सम्बोधनम्।

**आचार्ये**—आ + √चर् + ण्यत् कर्मणि स्त्रियाम् सम्बोधनम्।

**उपेहि**—उप + आ + √इ + लोट् हि।

इस श्लोक में श्लेष अलंकार तथा आर्या वृत्त (छन्द) है। छन्द का लक्षण—

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥५॥

**शब्दार्थः**—आर्य = आदरणीय पति जी; आज्ञानियोगेन = (अपनी) आज्ञा में (मुझे) लगाने से अर्थात् आज्ञा देकर, अनुगृह्णातु = कृतार्थ करें। तिष्ठतु = दूर रहे। कुटुम्बकम् = समूचा परिवार, पाकविशेषारम्भः = विशेष रूप से रसोई की तैयारी (आयोजन) ॥

**टीका**—आर्य = पूज्य, आज्ञानियोगेन—आज्ञायाम् = स्वकीये आदेशे नियोगेन = नियुक्त्या, अथवा आज्ञया = आदेशेन, यो नियोगः = कार्येषु प्रेरणम् तेन, अनुगृह्णातु = अनुग्रहं करोतु। तिष्ठतु = आस्ताम्। कुटुम्बानां समूहः कुटुम्बकम् = पोष्यवर्गः, पाकविशेषेति पाकस्य विशेषः पाकविशेषः = विशिष्टं भोजनमित्यर्थः तस्य आरम्भः = प्रवर्तनम् ॥

**टिप्पणी**- **आर्य**—√ऋ + ण्यत् कर्मणि आर्यः। स्त्री अपने पति को आर्य कहती है। पति अपनी पत्नी को आर्या कहता है। यही प्राचीन भारतीय पद्धति रही है। नाटक के नट एवं नटी भी परस्पर आर्या तथा आर्य कह कर ही बात करते हैं। यह आदरसूचक सम्बोधन है।

**नियोगः**—नि + √युज् + घञ् भावे + विभक्तिकार्यम्।

**सूत्र०**—आर्ये तिष्ठतु तावदाज्ञानियोगः। कथय किमद्य भवत्या भगवतां ब्राह्मणानामुपनिमन्त्रणेन कुटुम्बकमनुगृहीतमभिमता वा भवनमतिथयः संप्राप्ता यत एष पाकविशेषारम्भः।

**नटी**—आर्य आमन्त्रिता मया भगवन्तो ब्राह्मणाः। (अज्ज आमन्तिदा मए भअवन्तो बह्मणा।)

**सूत्र०**—कथय कस्मिन्निमित्ते।

**नटी**—उपरज्यते किल भगवान् चन्द्र इति। (उवरज्जदि किल भअवं चन्दो त्ति।)

**सूत्र०**—आर्ये क एवमाह?

**नटी**—एवं खलु नगरवासी जनो मन्त्रयते। (एवं खु णअरवासी जणो मन्तेदि।)

**सूत्र०**—आर्ये कृतश्रमोस्मि चतुःषष्ट्यङ्के ज्योतिःशास्त्रे। तत्प्रवर्त्यतां भगवतो ब्राह्मणानुद्दिश्य पाकः। चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि।

पश्य—

**क्रूरग्रहः स केतुश्चन्द्रं संपूर्णमण्डलमिदानीम्।**
**अभिभवितुमिच्छति बलात्**

(नेपथ्ये)

आः क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति?

**सूत्र०**— **रक्षत्येनं तु बुधयोगः॥६॥**

---

**तत्र भवताम्**—अत्यन्त आदर व्यक्त करने के लिए भवत् शब्द के पहले तत्र और अत्र शब्द जोड़े जाते हैं। सामने वर्तमान लोगों के लिए जब भवत् शब्द का प्रयोग होता है तब उसके पहले 'अत्र' शब्द लगता है और जब दूरस्थ व्यक्ति के लिए भवत् शब्द का प्रयोग होता है तब 'तत्र' शब्द उसके पहले जोड़ा जाता है।

**कुटुम्बकम्**—कुटुम्ब + कन् + विभक्तिकार्यम्॥

**शब्दार्थः**—भगवन्तः = पूज्य। उपरज्यते = राहु के द्वारा ग्रसे जा रहे हैं॥

**टीका**—भगवन्तः = सर्वथा पूज्याः। उपरज्यते = राहुणा ग्रस्यते॥

**टिप्पणी**—**उपरज्यते**—उप + √रञ्ज् + लट् ते कर्मणि। ग्रहण के पूर्व चन्द्रमा किञ्चित् रक्तवर्ण का हो जाता है। अतः ग्रहण को उपराग कहते हैं। ग्रहण के समय दान, ब्राह्मण-भोजन आदि प्रसिद्ध ही है।

**शब्दार्थः**—कृतश्रमः = जिसने परिश्रम किया है ऐसा व्यक्ति, चतुःषष्ट्यङ्के = चौसठ अङ्ग (भेद) वाले। प्रवर्त्यताम् = किया जाय, उद्दिश्य = निमित्त करके, के लिए। विप्रलब्धा = ठगी गयी।

**टीका**—कृतः = विहितः, श्रमः = अध्ययने आयासः येन असौ; चतुःषष्ट्यङ्के—चतुरधिका षष्टिश्चतुःषष्टिः (मध्यमपदलोपी समासः) चतुःषष्टिः अङ्गानि = प्रतिपाद्यप्रकाराः यस्मिन् तस्मिन्। प्रवर्त्यताम् = क्रियताम्, उद्दिश्य = निमित्तायेत्यर्थः, विप्रलब्धा =

**सूत्रधार**—श्रीमती जी, आज्ञा देने की बात तो कुछ देर के लिए दूर रहे। (पहले यह) बतलाओ (कि) क्या आज आपने पूज्य ब्राह्मणों को (भोजन करने के लिए) निमन्त्रण देकर परिवार को कृतार्थ किया है अथवा (अपने आप ही) आदरणीय अतिथिगण घर पर आ गये हैं जिससे यह विशेष रूप से रसोई का आयोजन हो रहा है।

**नटी**—आर्य, मैंने पूज्य ब्राह्मणों को निमन्त्रित किया है।

**सूत्रधार**—कहो, किस कारण से ?

**नटी**—भगवान् चन्द्र (राहु के द्वारा) ग्रसे जा रहे हैं।

**सूत्रधार**—कौन ऐसा कहता है ?

**नटी**—नगरवासी लोग ऐसा कह रहे हैं।

**सूत्रधार**—आर्ये, (मैंने) चौंसठ अङ्गवाले ज्योतिषशास्त्र (के अध्ययन) में परिश्रम किया है (अर्थात् ज्योतिष का मैं भी मर्मज्ञ हूँ)। तो, पूज्य ब्राह्मणों को लक्ष्य करके भोजन (बनाना है तो) बनवाओ। (किन्तु) चन्द्र ग्रहण के विषय में तो किसी के द्वारा तुम ठगी गयी हो (अर्थात् आज चन्द्रग्रहण नहीं है)। देखो—

(१) **चन्द्रमा के पक्ष में**—

नीच ग्रह वह प्रसिद्ध राहु इस समय सम्पूर्ण कलाओंवाले चन्द्रमा को बलपूर्वक ग्रसित करना चाहता है—(ऐसा आधा कहने पर)

(२) **चन्द्रगुप्त के पक्ष में**—

(चन्द्रगुप्त को पराजित करने के लिए) कठोर आग्रहवाला (राक्षस) मलयकेतु के साथ इस समय सम्पूर्ण राष्ट्रवाले चन्द्रगुप्त को बलपूर्वक अथवा सेना से पराजित करना चाहता है—(ऐसा आधा कहने पर)

---

वञ्चिता, प्रतारिता ॥

**टिप्पणी**—**प्रवर्त्यताम्**—प्र + √ वृत् + णिच् + लोट् ताम् कर्मणि।

**विप्रलब्धा**—वि + प्र + √ लभ् + क्त कर्मणि टाप्।

**क्रूरग्रह इति**—

**अन्वयः**—क्रूरग्रहः, सः, केतुः, इदानीम्, सम्पूर्णमण्डलम्, चन्द्रम्, बलात्, अभिभवितुम्, इच्छति, तु, बुधयोगः, एनम्, रक्षति ॥६॥

**शब्दार्थः**—क्रूरग्रहः = नीच ग्रह (पक्षा०—कठोर आग्रहवाला राक्षस), सः = वह प्रसिद्ध, केतुः = राहु, (सकेतुः = मलयकेतु के सहित), इदानीम् = इस समय, सम्पूर्णमण्डलम् = सम्पूर्ण कलाओंवाले, (पक्षा०—सम्पूर्ण राष्ट्रवाले), चन्द्रम् = चन्द्रमा को (पक्षा०—चन्द्रगुप्त को), बलात् = बलपूर्वक, अभिभवितुम् = ग्रसित करने के लिए (पक्षा०—पराजित करने के लिए), इच्छति = चाहता है, तु = किन्तु, बुधयोगः = बुध तारे का योग (पास में होना) (पक्षा०—विद्वान् चाणक्य का योग), एनम् = इसको, रक्षति = बचा रहा है ॥६॥

नटी—आर्य कः पुनरेष अस्मासु भूमिगोचरो भूत्वा चन्द्रं ग्रहाभियोगाद्रक्षितुमिच्छति । (अज्ज को उण एसो धरणीगोअरो भविअ चन्दं गहाभिजोआदो रक्खिदुं इच्छदि ।)

सूत्र०—आर्ये यत्सत्यं मयापि नोपलक्षितः । भवतु भूयोऽभियुक्तः [illegible] ज्ञास्ये । ( क्रूरग्रह इत्यादि पुनस्तदेव पठति )

(नेपथ्ये)

आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ।

सूत्र०—(आकर्ण्य) आं ज्ञातम् ।

कौटिल्यः—

(नटी भयं नाटयति)

कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्येन्दोर्द्विषदभियोग इत्यवैति ॥७॥

---

टीका—उपरागे बाधककारणं वर्णयन् सूत्रधारः कथयति—क्रूरग्रह इति । क्रूरग्रहः = दुष्टग्रहः; पक्षे—क्रूरः = भयङ्करः, दृढः इति यावत् ग्रहः=चन्द्रगुप्ताभिभवं प्रति आग्रहः यस्य सः; सः = प्रसिद्धः, केतुः = राहुः इत्यर्थः, उभयोरेकशरीरत्वेनाभेदव्यवहारः; पक्षे— केतुना = मलयकेतुना, सहितः = युक्तः, सकेतुः = राक्षसः इति भावः; इदानीम् = सम्प्रति, सम्पूर्णेति—सम्पूर्णम् = समग्रम् , मण्डलम् = कलात्मकः समवायः यस्य तम् , पौर्णमास्यां चन्द्रः समग्रकलः भवति; पक्षे—सम्पूर्णम् = निखिलम् , मण्डलम् = राष्ट्रम् यस्य तम्, अधिकृतसमग्रराष्ट्रमित्यर्थः; चन्द्रम् = चन्द्रमसम् ; पक्षे—चन्द्रम् = चन्द्रगुप्तम् , रामो रामचन्द्र इतिवत् ; बलात् = हठात् ; पक्षे- बलात् = सैन्यसमूहेनेत्यर्थः; अभिभवितुम = कवलीकर्तुम् ; पक्षे— अभिभवितुम् = पराभवितुम् ; इच्छति = वाञ्छति, तु = किन्तु, बुधयोगः—बुधस्य = तदाख्यस्य नक्षत्रस्य योगः = सहभावः, संयोगः इत्यर्थः; पक्षे—बुधस्य = विदुषः चाणक्यस्य योगः—संयोगः उद्योगः वा, एनम् = चन्द्रम् ; पक्षे—एनम = चन्द्रगुप्तम् , रक्षति = त्रायते । केचन व्याख्याकाराः 'चन्द्रमसमसम्पूर्णमण्डलम्' इति पाठं स्वीकृत्य 'असम्पूर्णमण्डलम् चन्द्रमसम्' इतिच्छेदं कुर्वन्ति । तत्तु असमीचीनम् असत्या पौर्णमास्यां चन्द्रग्रहणसम्भावनायाः अभावात् राहोः उद्योगस्य असम्भवाच्च । पौर्णमास्यामेवोपरागप्रवादः सम्भवति । तदैव बुधयोगेन रक्षणमपि सम्भवति । न हि पौर्णमास्यां चन्द्रः असम्पूर्णमण्डलः भवतीति दिक् ॥६॥

**टिप्पणी—ग्रहः**—गृह्णाति रवितेजांसि इति √ग्रह् + अच् कर्तरि ग्रहः ।

**चन्द्रम्**—सूत्रधार चन्द्रमा को लक्ष्य करके कहता है किन्तु पर्दे के पीछे स्थित चाणक्य जब इस श्लोक को सुनता है तो वह चन्द्र का अर्थ चन्द्रगुप्त समझता है। यही कारण है कि वह बिगड़ खड़ा होता है।

**केतुः**—यहाँ केतु का अर्थ है राहु । राहु शिर भाग का नाम है और धड़ को

(नेपथ्य में)

आह. यह कौन है (जो) मेरे रहते चन्द्र को (चन्द्रगुप्त को) पराजित करना चाहता है ?

सूत्रधार—(१) किन्तु बुध तारे का योग इस (चन्द्रमा) को बचा रहा है।

(२) किन्तु विद्वान् चाणक्य का योग (साहचर्य, उपाय, उद्योग) इस (चन्द्रगुप्त) को बचा रहा है ॥६॥

नटी—आर्य, यह कौन है ? जो पृथिवी पर स्थित होकर (भी आकाश में स्थित) चन्द्रमा को, ग्रह (राहु) के आक्रमण से बचाना चाहता है।

सूत्रधार—आर्ये, वस्तुतः मेरे द्वारा भी (यह स्वर) नहीं पहचाना गया। अच्छा, फिर सावधान होकर स्वर की स्पष्टता को पहचानता हूँ। ("क्रूरग्रहः"—इत्यादि फिर वही पढ़ता है)

(नेपथ्य में)

अरे यह कौन है (जो) मेरे जीते जी चन्द्रगुप्त को आक्रान्त करना चाहता है।

सूत्रधार—(सुनकर) अच्छा, समझ गया।

कौटिल्य—

(नटी भय का अभिनय करती है)

यह वह दुष्ट बुद्धिवाला चाणक्य है, जिसके द्वारा हठपूर्वक (अपनी) क्रोधरूपी आग में समग्र नन्दकुल जला डाला गया। (अथवा नन्दकुलरूपी बाँस जला डाला गया)। "चन्द्रग्रहणम्" (चन्द्रमभिभवितुमिच्छति) अर्थात् चन्द्र का ग्रहण हो रहा है—ऐसा सुनने से समान नामवाले मौर्यश्रेष्ठ चन्द्रगुप्त पर शत्रुओं के द्वारा आक्रमण (हो रहा है)—ऐसा समझ रहा है ॥७॥

---

केतु कहते हैं। राहु तथा केतु एक ही शरीर के दो भाग हैं। यही कारण है कि कभी-कभी दोनों में अभेद का व्यवहार होता है।

इस श्लोक में श्लेष अलंकार तथा आर्या छन्द है। छन्द का लक्षण—

यस्याःपादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादशद्वितीये चतुर्थके पञ्चदश सार्या ॥६॥

**शब्दार्थः**—धरणीगोचरः = पृथिवी पर स्थित, ग्रहाभियोगात् = ग्रह (राहु) के आक्रमण से। उपलक्षितः = पहचाना गया। अभियुक्तः = सावधान, तल्लीन, स्वरव्यक्तिम् = स्वर की स्पष्टता को।

**टीका**—धरणीगोचरः—धरणी = पृथ्वी, गोचरः = निवासदेशः यस्य, तादृशः, ग्रहेति—ग्रहेण = राहुणा, अभियोगः = आक्रमणम् तस्मात्। उपलक्षितः = सम्यग् ज्ञातः, अभियुक्तः = दत्तावधानः, स्वरव्यक्तिम् = स्वरस्फुटताम् ॥

**टिप्पणी**—गोचरः—गावश्चरन्ति अस्मिन् इति गोचरः = देशः, गो + √चर् + घ अधिकरणे + विभक्तिकार्ये गोचरः।

तदेहि आवां गच्छावः । (इति निष्क्रान्तौ)

इति प्रस्तावना ।

(ततः प्रविशति मुक्तां शिखां परामृशन् कुपितश्चाणक्यः)

चाणक्यः—कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ।

**आस्वादितद्विरदशोणितशोणशोभां**
**सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।**
**जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं**
**को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥८॥**

ग्रहाभियोगात्—अभि + √युज् + घञ् भावे + विभक्तिकार्यम् अभियोगः तस्मात् ।

अभियुक्तः—अभि + √युज् + क्त कर्तरि + विभक्तिकार्यम् अभियुक्तः ।

स्वरव्यक्तिम्—वि + √अञ्ज् + क्तिन् भावे + विभक्तिकार्यं व्यक्तिः ।

**कौटिल्य इति—**

**अन्वयः**—एषः, सः, कुटिलमतिः, कौटिल्यः, येन, प्रसभम्, क्रोधाग्नौ, नन्दवंशः, अदाहि । चन्द्रस्य, ग्रहणम्, इति, श्रुतेः, सनाम्नः, मौर्येन्दोः, द्विषदभियोगः, इति, अवैति ॥७॥

**शब्दार्थः**—एषः = यह, सः = वह, कुटिलमतिः = दुष्ट बुद्धिवाला, कौटिल्यः = चाणक्य (है), येन = जिसके द्वारा, प्रसभम् = हठपूर्वक, क्रोधाग्नौ = (अपनी) क्रोधरूपी आग में, नन्दवंशः = नन्दकुल अथवा नन्दरूप बाँस, अदाहि = जला डाला गया । चन्द्रस्य = चन्द्र का, ग्रहणम् = ग्रहण, इति = ऐसा, श्रुतेः = सुनने से, सनाम्नः = समान नामवाले, मौर्येन्दोः = चन्द्रगुप्त का (पर), द्विषदभियोगः = शत्रुओं के द्वारा आक्रमण, इति = ऐसा, अवैति = समझ रहा है ।

**टीका—कौटिल्य इति ।** एषः = पुरोदृश्यमानः, सः = प्रसिद्धः, कुटिलमतिः—कुटिला = वक्रा दुष्टेति यावत् मतिः = बुद्धिः यस्य तथोक्तः, कौटिल्यः = चाणक्यः, अस्तीति शेषः, येन = स्वकृत्यप्रसिद्धेन येन जनेन, प्रसभम् = हठपूर्वकम् ('प्रसभं तु बलात्कारे हठोऽथस्खलितं छलम्' इत्यमरः), क्रोधाग्नौ—क्रोधः = कोपः, अग्निः = अनलः इव तस्मिन्, नन्दवंशः = नन्दस्य कुलम्, नवनन्दाः इति यावत्, अथवा नन्दः = नन्दानां समवायः वंशः = वेणुः इव; यथा वह्नौ वंशः अनायासेन भस्मीभवति तथैवेत्यर्थः; अदाहि = दग्धः । 'चन्द्रस्य ग्रहणम्' (चन्द्रमभिभवितुमिच्छति) इति = इत्थम्, श्रुतेः = श्रवणात्, सनाम्नः—समानं नाम यस्य तस्य सनाम्नः = तुल्यनामधेयस्य, मौर्येन्दोः = मौर्यश्रेष्ठस्य चन्द्रगुप्तस्य, द्विषदिति—द्विषता = शत्रुणा मलयकेतुना, अभियोगः = आक्रमणम्, भवतीति शेषः, इति = इत्थम्, अवैति = जानाति । चन्द्रविपत्त्युपवर्णने चन्द्रगुप्तविपत्तिमुपलक्षयतीति ॥७॥

तो इधर (दूसरी ओर) हम दोनों चलें। (ऐसा कहकर निकल जाते हैं)

**प्रस्तावना समाप्त।**

[सूत्रधार और नटी के निकल जाने पर अपनी खुली हुई चोटी को (हाथ से) स्पर्श करता हुआ चाणक्य प्रवेश करता है।]

कौन (व्यक्ति) जंभाई के कारण खोले गये मुखवाले सिंह के मुख से, पान किये गये हाथी के खून से लाल शोभावाली (अतएव) चन्द्रमा की सन्ध्या के कारण अरुणिम कला की भाँति, चमकती हुई दाढ़ को (उसका) निरादर करके हरण करने की इच्छा करता है? ॥८॥

**विशेष**—'जब तक मैं मौर्यलक्ष्मी की रक्षा करता हूँ तब तक उसका अपहरण क्रुद्ध सिंह के दाँत तोड़ने के समान दुष्कर है।' यह अर्थ ध्वनित होता है ॥८॥

---

**टिप्पणी**—**कुटिलमतिः**—चाणक्य वस्तुतः कुटिलमति है। नन्दवंश का विनाश इसका उदाहरण है। यह कुटिलता उस समय अपनी पराकाष्ठा पर पहुँच जाती है जब पर्वतक का विनाश होता है। पर्वतक ने चन्द्रगुप्त को राज्य पर प्रतिष्ठित करने के लिए इसकी सहायता की थी।

**सनाम्नः**—चन्द्रगुप्त को चन्द्र भी कहा जाता था। यही कारण है कि चाणक्य को चन्द्र सुनने से चन्द्रगुप्त का भ्रम हुआ।

**मौर्य**—पुराणों के अनुसार मुरा एक शूद्र स्त्री थी। वह राजा नन्द की द्वितीय पत्नी थी। चन्द्रगुप्त उसीका लड़का था। यही कारण है कि चाणक्य उसे 'वृषल' कहता है। मुरायाः अपत्यं पुमान् इति मुरा + ण्य + विभक्तिकार्य मौर्यः।

**प्रस्तावना**—प्रस्तावना = परिचय, भूमिका, आमुख, प्र + √स्तु + णिच् + युच् + टाप्। प्रस्तावना का लक्ष्य दर्शकों को नाटककार तथा नाटक से परिचय कराना है। इसके साथ ही पात्रों को रङ्गमञ्च पर लाना भी प्रस्तावना का उद्देश्य है।

प्रस्तावना का लक्षण साहित्य दर्पण में इस प्रकार है—

नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥

इस श्लोक में रूपक अलङ्कार तथा प्रहर्षिणी छन्द है। छन्द का लक्षण—

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥७॥

**आस्वादितेति**—

**अन्वयः**—कः, जृम्भाविदारितमुखस्य, हरेः, मुखात्, आस्वादितद्विरदशोणितशोणशोभाम्, शशलाञ्छनस्य, सन्ध्यारुणाम्, कलाम्, इव, स्फुरन्तीम्, दंष्ट्राम्, परिभूय, हर्तुम्, इच्छति ॥८॥

**शब्दार्थः**—कः = कौन, जृम्भाविदारितमुखस्य = जंभाई के कारण खोले गये मुखवाले, हरेः = सिंह के, मुखात् = मुख से, आस्वादितद्विरदशोणितशोणशोभाम् = पान किये गये हाथी के खून से लाल शोभावाली, शशलाञ्छनस्य = चन्द्रमा की,

तदेहि आर्य! गच्छावः। (इति निष्क्रान्तौ)

इति प्रस्तावना।

(ततः प्रविशति मुक्तां शिखां परामृशन् कुपितश्चाणक्यः।)

चाणक्यः—कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ?

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥८॥

महाभियोगात्—अभि + √युज् + घञ् भावे + विभक्तिकार्यम् अभियोगः तस्मात्।

अभियुक्तः—अभि + √युज् + क्त कर्तरि + विभक्तिकार्यम् अभियुक्तः।

स्वरव्यक्तिम्—वि + √अञ्ज् + क्तिन् भावे + विभक्तिकार्यं व्यक्तिः।

**कौटिल्य इति—**

**अन्वयः**—एषः, सः, कुटिलमतिः, कौटिल्यः, येन, प्रसभम्, क्रोधाग्नौ, नन्दवंशः, अदाहि। चन्द्रस्य, ग्रहणम्, इति, श्रुतेः, सनाम्नः, मौर्येन्दोः, द्विषदभियोगः, इति, अवैति ॥७॥

**शब्दार्थः**—एषः = यह, सः = वह, कुटिलमतिः = दुष्ट बुद्धिवाला, कौटिल्यः = चाणक्य (है), येन = जिसके द्वारा, प्रसभम् = हठपूर्वक, क्रोधाग्नौ = (अपनी) क्रोधरूपी आग में, नन्दवंशः = नन्दकुल अथवा नन्दरूप बाँस, अदाहि = जला डाला गया। चन्द्रस्य = चन्द्र का, ग्रहणम् = ग्रहण, इति = ऐसा, श्रुतेः = सुनने से, सनाम्नः = समान नामवाले, मौर्येन्दोः = चन्द्रगुप्त का (पर), द्विषदभियोगः = शत्रुओं के द्वारा आक्रमण, इति = ऐसा, अवैति = समझ रहा है।

**टीका—कौटिल्य इति।** एषः = पुरोदृश्यमानः, सः = प्रसिद्धः, कुटिलमतिः—कुटिला = वक्रा दुष्टेति यावत् मतिः = बुद्धिः यस्य तथोक्तः, कौटिल्यः = चाणक्यः, अस्तीति शेषः, येन = स्वकृत्यप्रसिद्धेन येन जनेन, प्रसभम् = हठपूर्वकम् ('प्रसभं तु बलात्कारे हठोऽथस्खलितं छलम्' इत्यमरः), क्रोधाग्नौ—क्रोधः = कोपः, अग्निः = अनलः इव तस्मिन्, नन्दवंशः = नन्दस्य कुलम्, नवनन्दाः इति यावत्, अथवा नन्दः = नन्दानां समवायः वंशः = वेणुः इव; यथा वह्नौ वंशः अनायासेन भस्मी—भवति तथैवेत्यर्थः; अदाहि = दग्धः। 'चन्द्रस्य ग्रहणम्' (चन्द्रमभिभवितुमिच्छति) इति = इत्थम्, श्रुतेः = श्रवणात्, सनाम्नः—समानं नाम यस्य तस्य सनाम्नः = तुल्यनामधेयस्य, मौर्येन्दोः = मौर्यश्रेष्ठस्य चन्द्रगुप्तस्य, द्विषदिति—द्विषता = शत्रुणा मलयकेतुना, अभियोगः = आक्रमणम्, भवतीति शेषः, इति = इत्थम्, अवैति = जानाति। चन्द्रविपत्त्युपवर्णने चन्द्रगुप्तविपत्तिमुपलक्षयतीति ॥७॥

तो इधर (दूसरी ओर) हम दोनों चलें। (ऐसा कहकर निकल जाते हैं)

प्रस्तावना समाप्त।

[सूत्रधार और नटी के निकल जाने पर अपनी खुली हुई चोटी को (हाथ से) स्पर्श करता हुआ चाणक्य प्रवेश करता है।]

कौन (व्यक्ति) जंभाई के कारण खोले गये मुखवाले सिंह के मुख से, पान किये गये हाथी के खून से लाल शोभावाली (अतएव) चन्द्रमा की सन्ध्या के कारण अरुणिम कला की भाँति, चमकती हुई दाढ़ को (उसका) निरादर करके हरण करने की इच्छा करता है? ॥८॥

**विशेष**—'जब तक मैं मौर्यलक्ष्मी की रक्षा करता हूँ तब तक उसका अपहरण क्रुद्ध सिंह के दाँत तोड़ने के समान दुष्कर है।' यह अर्थ ध्वनित होता है ॥८॥

---

**टिप्पणी**—**कुटिलमतिः**—चाणक्य वस्तुतः कुटिलमति है। नन्दवंश का विनाश इसका उदाहरण है। यह कुटिलता उस समय अपनी पराकाष्ठा पर पहुँच जाती है जब पर्वतक का विनाश होता है। पर्वतक ने चन्द्रगुप्त को राज्य पर प्रतिष्ठित करने के लिए इसकी सहायता की थी।

**सनाम्नः**— चन्द्रगुप्त को चन्द्र भी कहा जाता था। यही कारण है कि चाणक्य को चन्द्र सुनने से चन्द्रगुप्त का भ्रम हुआ।

**मौर्य**—पुराणों के अनुसार मुरा एक शूद्र स्त्री थी। वह राजा नन्द की द्वितीय पत्नी थी। चन्द्रगुप्त उसीका लड़का था। यही कारण है कि चाणक्य उसे 'वृषल' कहता है। मुरायाः अपत्यं पुमान् इति मुरा + ण्य + विभक्तिकार्य मौर्यः।

**प्रस्तावना**—प्रस्तावना = परिचय, भूमिका, आमुख, प्र + √स्तु + णिच् + युच् + टाप्। प्रस्तावना का लक्ष्य दर्शकों को नाटककार तथा नाटक से परिचय कराना है। इसके साथ ही पात्रों को रङ्गमञ्च पर लाना भी प्रस्तावना का उद्देश्य है।

प्रस्तावना का लक्षण साहित्य दर्पण में इस प्रकार है—

नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥

इस श्लोक में रूपक अलङ्कार तथा प्रहर्षिणी छन्द है। छन्द का लक्षण—

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥७॥

**आस्वादितेति**—

**अन्वयः**—कः, जृम्भाविदारितमुखस्य, हरेः, मुखात्, आस्वादितद्विरदशोणितशोणशोभाम्, शशलाञ्छनस्य, सन्ध्यारुणाम्, कलाम्, इव, स्फुरन्तीम्, दंष्ट्राम्, परिभूय, हर्तुम्, इच्छति ॥८॥

**शब्दार्थः**—कः = कौन, जृम्भाविदारितमुखस्य = जंभाई के कारण खोले गये मुखवाले, हरेः = सिंह के, मुखात् = मुख से, आस्वादितद्विरदशोणितशोणशोभाम् = पान किये गये हाथी के खून से लाल शोभावाली, शशलाञ्छनस्य = चन्द्रमा की,

अपि च —

नन्दकुलकालभुजगीं कोपानलबहुलनीलधूमलताम् ।
अद्यापि बध्यमानां वध्यः को नेच्छति शिखां मे ॥९॥

अपि च —

उल्लंघयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्मपरिमाणविवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ॥१०॥

---

सन्ध्यारुणाम् = सन्ध्या के कारण अरुणिम, कलामिव = कला की भाँति, स्फुरन्तीम् = चमकती हुई, दंष्ट्राम् = दाढ़ को, परिभूय = निरादर करके, हर्तुम् = हरण करने के लिए, इच्छति = इच्छा करता है ॥८॥

**टीका**—आस्वादितेति । क्रुद्धस्य चाणक्यस्य गर्वपरिवाहिनीयमुक्तिः । कः = कः जनः, जृम्भेति—जृम्भया = श्रान्तिजनितया मुखव्यादानात्मकक्रियया विदारितम् = प्रसारितम् मुखम् = आननम् येन तादृशस्य, हरेः = सिंहस्य, मुखात् = आननात् , आस्वादितेति—आस्वादितम् = पीतम् यत् , द्विरदस्य = गजस्य, शोणितम् = रक्तम् तेन शोणा = रक्तवर्णा, शोभा = कान्तिः यस्याः तादृशीम् , शशलाञ्छनस्य = पूर्णचन्द्रस्य, सन्ध्यया = सान्ध्यवेलया, अरुणाम् = रक्ताभाम् , कलामिव = लेखामिव, स्फुरन्तीम् = अवभासमानाम् , दंष्ट्राम् = दशनम् , परिभूय = हठात् तिरस्कृत्य, सिंहमिति शेषः, हर्तुम् = उन्मूलयितुम् , इच्छति = वाञ्छति । चाणक्यमवमत्य मौर्यलक्ष्मीहरणं तथैव दुष्करं यथोन्मत्तस्य सिंहस्य दशनोन्मूलनमिति ॥८॥

**टिप्पणी—परिभूय**—परि + √भू + यत् ।

**हर्तुम्**—√हृ + तुमुन् ।

इस श्लोक में उपमा अलंकार तथा वसन्ततिलका छन्द है । छन्द का लक्षण—

ज्ञेयं वसन्ततिलकं तभजा जगौ गः ॥८॥

**नन्दकुलेति**—

**अन्वयः**—वध्यः, कः, नन्दकुलकालभुजगीम् , कोपानलबहुलनीलधूमलताम् , मे, शिखाम् , अद्य, अपि, बध्यमानाम् , न, इच्छति ॥९॥

**शब्दार्थः**—वध्यः = वध के योग्य, कः = कौन (व्यक्ति), नन्दकुलकालभुजगीम् = नन्दवंश के लिए कालसर्पिणी, कोपानलबहुलधूमलताम् = क्रोधाग्नि की (निकली हुई) अत्यन्त काली धूमलता (के समान), मे = मेरी, शिखाम् = चोटी को, अद्य = आज, अपि = भी, बध्यमानाम् = बाँधी जाती हुई, न = नहीं, इच्छति = चाहता है ॥९॥

**टीका—नन्दकुलेति** । वधमर्हतीति वध्यः = वधार्हः, कः = व्यक्तिः, नन्देति—नन्दकुलस्य=नन्दवंशस्य, कालभुजगीम् = कृष्णसर्पिणीम् , कालसर्पिणीमिव विनाशिकामित्यर्थः, कोपेति—कोपः = क्रोधः एव अनलः = वह्निः तस्य बहुलनीला = अतिकृष्णा, अनेन

और भी—

वध के योग्य कौन व्यक्ति नन्दवंश के लिए कालसर्पिणी, क्रोधाग्नि की (निकलती हुई) अत्यन्त काली धूमलता (के समान), मेरी चोटी को आज भी बाँधी जाती हुई नहीं (देखना) चाहता है ॥९॥

मेरे, प्रदीप्त नन्दकुलरूपी वन को (जलाने के लिए) अग्नि के समान, क्रोध के तेज को लाँघता हुआ, शत्रु की और अपनी शक्ति के (न्यूनाधिक्य की) पहचान में असमर्थ कौन व्यक्ति (आग की लपट में कूदनेवाले) पतङ्ग की रीति से शीघ्र ही विनाश को प्राप्त हो रहा है ॥१०॥

---

चाणक्यस्य यौवनं सूचितम्, या धूमलता = धूमलेखा तादृशीम्, मे = मम, प्रथितक्रोधस्येत्यर्थः, शिखाम्, अद्यापि = अधुनापि, कृतेऽपि नन्दकुलनाशे इत्यर्थः, बध्यमानाम् = संयम्यमानाम्, न = नहि, इच्छति = अभिलषति। यदि कस्मैचित् क्रुद्धो भविष्यामि तर्हि विना तस्य नाशं पुनः शिखां न बद्धां करिष्यामि इति भावः ॥९॥

**टिप्पणी**—**वध्यः**—वध + यत् + विभक्तिकार्यम्।

**नन्दकुल०**—चाणक्य ने प्रतिज्ञा की थी कि जबतक नन्दकुल का नाश नहीं कर लूँगा तब तक शिखा को नहीं बाधूँगा। यही कारण है कि वह उसे नन्दकुल को डसनेवाली काली नागिन बतला रहा है।

**कोपानल०**—इससे ज्ञात होता है कि आग अब भी सुलग रही है, बुझी नहीं है। वह किसी भी समय भड़क सकती है।

**नेच्छति**—चाणक्य का अभिप्राय है कि यदि पुनः कोई मुझे क्रुद्ध कर देगा तो मुझे फिर उसके विनाश तक चोटी न बाँधने की प्रतिज्ञा करनी पड़ेगी।

इस श्लोक में रूपक अलंकार तथा आर्या छन्द है। छन्द का लक्षण—

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥९॥

**उल्लङ्घयन् ममेति**—

**अन्वयः**—मम, समुज्ज्वलतः, नन्दकुलकाननधूमकेतोः, कोपस्य, प्रतापम्, उल्लङ्घयन्, परात्मपरिमाणविवेकमूढः, कः, शालभेन, विधिना, सद्यः, विनाशम्, लभताम् ॥१०॥

**शब्दार्थः**—मम = मेरे, समुज्ज्वलतः = प्रदीप्त, नन्दकुलकाननधूमकेतोः = नन्दकुलरूपी वन को (जलाने के लिए) अग्नि के समान, कोपस्य = क्रोध के, प्रतापम् = तेज को, उल्लङ्घयन् = लाँघता हुआ, परात्मपरिमाणविवेकमूढः = शत्रु की और अपनी शक्ति के (न्यूनाधिक्य की) पहचान में असमर्थ, कः = कौन व्यक्ति, शालभेन = (आग की लपट में कूदनेवाले) पतङ्ग की, विधिना = रीति से, सद्यः = शीघ्र ही, विनाशम् = विनाश को, लभताम् = प्राप्त करे (अर्थात् प्राप्त हो रहा है) ॥१०॥

**टीका**—**उल्लङ्घयन् ममेति**। मम = दर्शितकोपप्रभावस्य चाणक्यस्येत्यर्थः, समुज्ज्व-

शार्ङ्गरव, शार्ङ्गरव ।

(प्रविश्य)

शिष्यः—उपाध्याय, आज्ञापय ।

चाण०—वत्स, उपवेष्टुमिच्छामि ।

शिष्यः—उपाध्याय, नन्वियं सन्निहितवेत्रासनैव द्वारप्रकोष्ठशाला । इहोपवेष्टुमर्हत्युपाध्यायः ।

चाण०—वत्स, कार्याभिनियोग एवास्मान्व्याकुलयति न पुनरुपाध्यायसहभूः शिष्यजने दुःशीलता । (नाट्येनोपविश्यात्मगतम्) कथं प्रकाशतां गतोऽयमर्थः पौरेषु यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणन—प्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह सन्धाय तदुपगृहीतेन च महता म्लेच्छराजबलेन परिवृतो वृषलमभियोक्तुमुद्यत इति । (विचिन्त्य) अथवा येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्सोऽहमिदानीं प्रकाशीभवन्तमप्येनमर्थं समर्थः प्रशमयितुम् । कुतः ?

---

प्रवृद्धः = उद्दीप्तस्य, नन्दकुलेति—नन्दकुलम् = नन्दवंशः एव काननम्—अरण्यम् तत्र, धूमः केतुः = चिह्नमस्येति, धूमकेतुः = अग्निः ('धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः) तस्य नन्दकुलविनाशकरस्येति यावत्, कोपस्य = क्रोधस्य, प्रतापम् = प्रकृष्टं तेजः, उल्लङ्घयन् = अतिक्रामन्, परात्मेति—परस्य = शत्रोः, ममेतिभावः, आत्मनः = स्वस्य च यत् परिमाणम् = मात्रा सामर्थ्यमिति यावत् तस्य विवेके = भेदज्ञाने, विमूढः = अज्ञः, मम स्वस्य च सामर्थ्यमज्ञात्वैवेत्यर्थः, कः = कः जनः, शलभस्य = कीटस्य अयं शालभः = कीटसम्बन्धी तेन, विधिना = रीत्या, यथा शलभः अग्नौ उत्पतन् स्वकीयमेव विनाशं नयति तथैवेत्यर्थः, सद्यः = झटिति, विनाशम् = मृत्युम् , लभताम् = भजतामिति ॥१०॥

**टिप्पणी—नन्दकुलकाननधूमकेतोः**—जिस तरह वनाग्नि वन के सम्पूर्ण वृक्षादिकों को भस्म कर देता है, उसी तरह हमारे कोपरूपी तेज ने नन्दकुल का विनाश कर दिया है । अतः कोप नन्दकुलरूपी कानन के लिए धूमकेतु = अग्नि है ।

**शालभेन विधिना**—वर्षा ऋतु में फतिंगे आग पर कूदते (आक्रमण करते) हैं । किन्तु इससे आग का कुछ बिगड़ता नहीं अपितु वे फतिंगे ही जल कर मर जाते हैं । यही है शालभ विधि ।

इस श्लोक में रूपक अलंकार तथा वसन्त तिलका छन्द है । छन्द का लक्षण—

ज्ञेयं वसन्ततिलकं तभजा जगौ गः ॥१०॥

**शब्दार्थः**—उपाध्याय = आचार्यजी । उपवेष्टुम् = बैठने के लिए । सन्निहितवेत्रासना = पड़ा है बेंत का आसन जिसमें ऐसा, द्वारप्रकोष्ठशाला = दरवाजे के (पासवाला) कमरा । अर्हति = योग्य हैं, सकते हैं ।

**टीका**—उपेत्य अधीते अस्मादिति उपाध्यायः तत्सम्बोधने हे उपाध्याय = हे आचार्य । उपवेष्टुम् = आसनस्थः भवितुम् । सन्निहितेति—सन्निहितम् = उपस्थितम् ,

शार्ङ्गरव, शार्ङ्गरव !

(प्रवेश करके)

**शिष्य**—उपाध्याय, आज्ञा दीजिये।

**चाणक्य**—बेटा, बैठना चाहता हूँ।

**शिष्य**—उपाध्याय, यह (पास में ही) पड़ा है बेंत का (बना हुआ) आसन जिसमें ऐसा दरवाजे के (पासवाला) कमरा है ! तो आप इस (कमरे) में बैठ सकते हैं।

**चाणक्य**—बेटा, कार्य की ( राक्षस को वश में करने की ) तल्लीनता ही हमें व्याकुल बना देती है (यही कारण है कि तुम्हारे द्वारा बिछाया गया आसन नहीं देख सका), न कि उपाध्याय की शिष्य लोगों के प्रति स्वाभाविक कठोरता (हमें व्यग्र बनाती है)। [अभिनय पूर्वक बैठकर अपने आप] नागरिकों में यह बात कैसे प्रचारित हो गई कि—नन्दवंश के विनाश से उत्पन्न क्रोधवाला (अर्थात् क्रुद्ध) राक्षस, (अपने) पिता (पर्वतक) के वध से कुपित सम्पूर्ण नन्द-राज्य को (प्राप्त करने के) वादे से प्रोत्साहित, पर्वतक पुत्र मलयकेतु के साथ सन्धि करके उसके (मलयकेतु के) द्वारा इकट्ठी की हुई बहुत बड़ी म्लेच्छ राजाओं की सेना से युक्त (होकर) चन्द्रगुप्त पर आक्रमण करने के लिये तैयार है। (सोचकर) अथवा जिस मेरे द्वारा सारे संसार के सामने नन्दकुल के वध की प्रतिज्ञा करके दुस्तर प्रतिज्ञारूपी नदी पार की गयी वही मैं इस समय फैलती हुई इस बात को भी (कि राक्षस आक्रमण की तैयारी में है) शान्त करने में समर्थ हूँ। क्योंकि—

---

वेत्रनिर्मितमासनम् वेत्रासनम् = वेत्रनिर्मितः विष्टरः यस्यां तादृशी, द्वारेति—द्वारप्रकोष्ठ = प्रवेशद्वारसमीपे इत्यर्थः या शाला = कुटी ('वासः कुटी द्वयोःशाला' इत्यमरः), अर्हति = योग्यो भवति शक्नोति वा।

**टिप्पणी—उपाध्याय**—उप + अधि + √इङ् + घञ् + विभक्त्यादिकार्यम्।

**ननु**—'ननु' कहने से शिष्य की कुछ झल्लाहट प्रकट होती है। क्योंकि उसने पहले ही आदेश का पालन कर दिया है। किन्तु फिर भी आचार्य आसन बिछाने का संकेत कर रहे हैं।

'नन्वाक्षेपे परिप्रश्ने प्रत्युक्त्वावधारणे' इति हैमः।

**सन्निहित**—सम् + नि + √धा + क्त कर्मणि ॥

**शब्दार्थः**—कार्याभिनियोगः = कार्य में तल्लीनता। उपाध्यायसहभूः = उपाध्याय की स्वाभाविक। दुःशीलता = कठोरता। प्रकाशताम् = प्रचार को। गतः = गई है। अर्थः = बात। नन्दकुलविनाशजनितरोषः = नन्दवंशके विनाश से उत्पन्न क्रोधवाला। पितृवधामर्षितेन = (अपने) पिता (पर्वतक) के वध से कुपित। सकलनन्दराज्यपरिपणन-प्रोत्साहितेन = सम्पूर्ण नन्दराज्यको (प्राप्त करने के) वादे से प्रोत्साहित। सन्धाय = सन्धि करके। वृषलम् = चन्द्रगुप्त को। प्रशमयितुम् = शान्त करने के लिए।

**टीका**—वत्सेति। कार्ये = कर्मणि राक्षसस्य स्वायत्तीकरणे अभिनियोगः = तल्लीनता। उपाध्यायेति—उपाध्यायानाम् = आचार्याणाम् सहभूः = सहजा स्वाभाविकी। दुः-

श्यामीकृत्याननेन्दूनरियुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य ।
दग्ध्वा संभ्रान्तपौरद्विजगणरहितान्नन्दवंशप्ररोहान्
दाह्याभावान्न खेदाज्ज्वलन इव वने शाम्यति क्रोधवह्निः ॥११॥

---

शीलता = कठोरतेत्यर्थः, उपाध्यायाः प्रकृत्यैव कोपनशीलाः भवन्तीति भावः । प्रकाश-नाम् = प्रकाशम् । गतः = प्राप्तः । अर्थः = विषयः वार्ता वा । नन्दकुलेति---नन्द-कुलस्य = नन्दवंशस्य यः विनाशः = ध्वंसः तेन जनितः रोषः = क्रोधः यस्य तादृशः । पितृवधेति = पितुः = जनकस्य पर्वतकस्येत्यर्थः यः वधः = मारणम् तेन अमर्षितः = अतिक्रुद्धः तादृशेन, सकलेति---सकलम् = समग्रम् यत् नन्दराज्यम् = नन्दराष्ट्रम् तदेव परिपणनम् = प्राप्तव्यं मूलधनम् तेन प्रोत्साहितः = जनितोत्साहः तादृशेन, सन्धाय = सन्धिं विधाय । वृषलम् = शूद्रं चन्द्रगुप्तम् । प्रशमयितुम् = निराकर्तुम् ।

**टिप्पणी**—**व्याकुलयति**—व्याकुल करती है, वि + आ + कुल + अच् कर्तरि + विभक्तिकार्यं व्याकुलः । व्याकुलं करोति इति व्याकुल + णिच् + तिप् ।

**उपाध्यायसहभूः दुःशीलता**—पहले उपाध्याय (अध्यापक) में कठोरता का होना स्वाभाविक गुण माना जाता था ।

**परिपणनम्**—परि + √पण + ल्युट् + विभक्तिकार्यम् । राक्षस ने मलयकेतु से वादा किया था कि चन्द्रगुप्त को जीत लेने के बाद सम्पूर्ण नन्दराज्य आप को दे दूंगा ।

**म्लेच्छबलेन**—म्लेच्छन्ति इति म्लेच्छ + अच् कर्तरि म्लेच्छाः । प्राचीन काल में आर्य लोग अपने से भिन्न लोगों को म्लेच्छ कहा करते थे ।

**वृषलः**—वृषल कहते हैं शूद्र को । चन्द्रगुप्त शूद्रास्त्री के गर्भ से पैदा हुआ था अतः चाणक्य उसे वृषल कहता था ।

**निस्तीर्णा** = पार करली गयी—निस् + √तृ + क्त + टाप् ॥

**श्यामीकृत्येति**—

**अन्वयः**—यस्य, मम, क्रोधवह्निः, अरियुवतिदिशाम्, आननेन्दून्, सन्ततैः, शोक-धूमैः, श्यामीकृत्य, मन्त्रिद्रुमेभ्यः, नयपवनहृतम्, कामम्, मोहभस्म, प्रकीर्य; सम्भ्रान्त-पौरद्विजगणरहितान्, नन्दवंशप्ररोहान्, दग्ध्वा; वने, ज्वलनः, इव, दाह्याभावात्, शाम्यति, खेदात्, न ॥११॥

**शब्दार्थः**—यस्य = जिस, मम = मेरी, क्रोधवह्निः = कोपरूपी आग, अरियुवति-दिशाम् = शत्रुओं की स्त्रीरूपी दिशाओं के, आननेन्दून् = मुखरूपी चन्द्रमाओं को, सन्ततैः = निरन्तर, शोकधूमैः = शोकरूपी धूमों से, श्यामीकृत्य = मलिन बनाकर, मन्त्रिद्रुमेभ्यः = मन्त्रीरूपी वृक्षों के लिये, नयपवनहृतम् = नीतिरूपी वायु से लायी गयी, कामम् = पर्याप्त, मोहभस्म = मोहरूपी भस्म को, प्रकीर्य = बिखेरकर, सम्भ्रान्तपौरद्विज-

यनगृहम् । तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टयः प्रथमविहितनिर्गमनमार्गमजानन्तः सर्वे एव बीभत्सकादयो ज्वलनमुपगम्य तत्रैव नष्टाः ।

राक्ष०—(सास्रम्) कष्टं भोः कष्टम् । नन्वे, पश्य दैवसम्पदं दुरात्मनश्चन्द्रगुप्तहतकस्य । कुतः ?

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
दैवात्पर्वतकस्तया स निहतो यस्तस्य राज्यार्द्धहृत् ।
ये शस्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः
मौर्यस्यैव फलन्ति पश्य विविधश्रेयांसि मन्नीतयः ॥ १६ ॥

विरा०—अमात्य, तथापि खलु प्रारब्धमपरित्याज्यमेव । पश्य—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।

---

रुद्धाः = आच्छादिताः = दृष्टयः = नेत्राणि येषां तादृशाः; प्रथमविहितेति—प्रथमम् = पूर्वमेव विहितः = कृतः निर्गमनमार्गः = निष्क्रमणपथः यस्मात् यत्र वा तादृशम्, द्वारम् = प्रवेशनिष्क्रमणस्थलम् ।

**कन्या तस्येति—**

**अन्वयः**—मया, तस्य, वधाय, या, विषमयी, कन्या, गूढम्, प्रयुक्ता, तया, दैवात्, सः, पर्वतकः, निहतः, यः, तस्य, राज्यार्द्धहृत्, (आसीत्); ये, (जनाः), शस्त्रेषु, च, रसेषु, प्रणिहिताः, ते, तैः, एव, घातिताः; पश्य, मन्नीतयः, मौर्यस्य, एव, विविधश्रेयांसि, फलन्ति ॥१६॥

**शब्दार्थः**—मया = मेरे द्वारा, तस्य = उस (चन्द्रगुप्त) के, वधाय = वध के लिए, या = जो, विषमयी = विषैली, कन्या = अविवाहिता युवती स्त्री, गूढम् = गुप्तरूप से, प्रयुक्ता = नियुक्त की गयी थी, तया = उसके द्वारा, दैवात् = संयोगवश, सः = वह, पर्वतकः = पर्वतक, निहतः = मारा गया, यः = जो, तस्य = उस (चन्द्रगुप्त) के, राज्यार्द्धहृत् = राज्य के आधे (हिस्से) का हकदार, (आसीत् = था); ये = जो, (जनाः = व्यक्ति), शस्त्रेषु = शस्त्र का प्रयोग करने के विषय में, च = और, रसेषु = विष का प्रयोग करने के विषय में, प्रणिहिताः = नियुक्त किये गये थे, ते = वे, तैः = उन्हीं के द्वारा, एव = ही, घातिताः = मारे गये; पश्य = देखो, मन्नीतयः = हमारी नीतियाँ, मौर्यस्य = मौर्य (चन्द्रगुप्त) के लिए, एव = ही, विविधश्रेयांसि = अनेक तरह के कल्याणों को, फलन्ति = फल रही हैं, सम्पन्न कर रही हैं ॥१६॥

**टीका**—**कन्येति** । मया = चन्द्रगुप्तवैरिणा राक्षसेन, तस्य = शत्रुत्वेनप्रसिद्धस्य चन्द्रगुप्तस्य, वधाय = प्राणनाशाय, या विषमयी = विषपरिपूर्णशरीरा, कन्या = अविवाहिता युवतिः, गूढम् = प्रच्छन्नम्, यथा स्यात्तथा, प्रयुक्ता = नियुक्ता, तस्य वधार्थं प्रेरितेति भावः, तया = विषकन्यया, दैवात् = संयोगात्, सः पर्वतकः = पर्वतेश्वरः, निहतः = मृत्युं प्रापितः, यः = यः पर्वतकः, तस्य = चन्द्रगुप्तस्य, राज्येति—राज्यस्य = साम्राज्यस्य

समझ कर वह शयनगृह जला दिया गया। उस (शयनगृह) के जलने पर धुएँ से अन्ध आँखवाले सभी बीभत्सक आदि पहले से ही बनाया गया है निकलने का रास्ता जहाँ से ऐसे दरवाजे को न प्राप्त करके आग में फँसकर वहीं पर नष्ट हो गये।

राक्षस—(आँखों में आँसू भरकर) कष्ट है, अरे कष्ट है। मित्र, दुरात्मा नीच चन्द्रगुप्त की भाग्यसम्पत्ति (भाग्य की प्रबलता) को देखो। क्योंकि—

मेरे द्वारा उस (चन्द्रगुप्त) के वध के लिए जो विषैली कन्या गुप्तरूप से नियुक्त की गयी थी उसके द्वारा संयोगवश वह पर्वतक (ही) मारा गया जो उस (चन्द्रगुप्त) के राज्य के आधे हिस्से का हकदार था। जो व्यक्ति (चन्द्रगुप्त को मारने के लिए) शस्त्र और विष का प्रयोग करने के विषय में नियुक्त किये गये थे वे लोग उन्हीं (शस्त्र एवं विष) के द्वारा मारे गये। देखो, हमारी नीतियाँ मौर्य (चन्द्रगुप्त) के लिए ही अनेक तरह के कल्याणों को सम्पन्न कर रही हैं (न कि मेरे लिए)।।१६।।

विराधगुप्त—अमात्य, तो भी प्रारम्भ किये गये (कार्य) को नहीं ही छोड़ना चाहिए। देखिये—

नीच (मनुष्यों) के द्वारा विघ्नों के भय से (कार्य) नहीं ही प्रारम्भ किया जाता। मध्यम (कोटि के पुरुष) (किसी कार्य को) प्रारम्भ करके विघ्नों के द्वारा

---

अर्द्धम् = अर्द्धभागम् हरति = आददाति इति राज्यार्द्धहृत् = राज्यार्द्धभाक्, आसीदिति शेषः; ये जनाः शस्त्रेषु = आयुधप्रयोगेषु, रसेषु = विषप्रयोगेषु ('शृङ्गारादौ विषे वीर्ये गुणे रागे जले रसः' इत्यमरः), प्रणिहिताः = प्रेरिताः नियुक्ताः वा, ते जनाः, तैः = शस्त्ररसैः एव, न तु अन्यैरिति भावः, घातिताः = विनाशिताः; पश्य = अवलोकय, मम नीतयः मन्नीतयः = ममोपायाः, चन्द्रगुप्तवधाय प्रयुक्ताः ममोपायाः इत्यर्थः, मौर्यस्य = वधायेप्सितस्य चन्द्रगुप्तस्येत्यर्थः, एवेति निश्चये, विविधश्रेयांसि = बहूनि मङ्गलानि, शत्रुमारणरूपाणीति भावः, फलन्ति = प्रतिपादयन्ति, न तु स्वप्रयोक्तुः ममेतितात्पर्यम् ।।१६।।

**टिप्पणी—विषमयी**—विष + मयट् + ङीप्।

**प्रणिहिताः**—प्र + नि √ धा + क्त + विभक्तिकार्यम्।

**ते घातिताः**—'ते' का तात्पर्य है—वर्बरक—दारुवर्मा—अभयदत्त—प्रमोदक और बीभत्सक।

**घातिताः**—√ हन् + णिच् + क्त + विभक्तिकार्यम्।

**मौर्यस्य······मन्नीतयः**—मेरी नीतियों का अच्छा परिणाम मुझे मिलना चाहिए और बुरा शत्रु चन्द्रगुप्त को। किन्तु दुःख है कि उनका अच्छा परिणाम ही चन्द्रगुप्त को मिल रहा है और बुरा मुझे।

इस श्लोक में प्रयुक्त छन्द का नाम है—शार्दूलविक्रीडित। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ।।१६।।

विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमजना न परित्यजन्ति ॥ १७ ॥

अपि च—

किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किन्त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढं प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १८ ॥

---

**प्रारभ्यते नेति—**

**अन्वयः**—नीचैः, विघ्नभयेन, (कार्यम्), न, खलु, प्रारभ्यते; मध्याः, प्रारभ्य, विघ्नविहताः (भूत्वा), विरमन्ति; उत्तमगुणाः, विघ्नैः, पुनः, पुनः, प्रतिहन्यमानाः, अपि, प्रारब्धम्, (कार्यम्), न, परित्यजन्ति ॥१७॥

**शब्दार्थः**—नीचैः = नीच (मनुष्यों) के द्वारा, विघ्नभयेन = विघ्नों के भय से, (कार्यम् = कार्य), न = नहीं, खलु = ही, प्रारभ्यते = प्रारम्भ किया जाता; मध्याः = मध्यम (कोटि के पुरुष), प्रारभ्य = प्रारम्भ करके, विघ्नविहताः = विघ्नों के द्वारा प्रताड़ित, (भूत्वा = होकर), विरमन्ति = रुक जाते हैं; उत्तमगुणाः = उत्तम गुणोंवाले (पुरुष), विघ्नैः = विघ्नों से, पुनः = फिर, पुनः = फिर, प्रतिहन्यमानाः = प्रताडित होते हुए, अपि = भी, प्रारब्धम् = आरम्भ किये गये, (कार्यम् = कार्य) को, न = नहीं, परित्यजन्ति = छोड़ते हैं ॥१७॥

**टीका**—प्रारभ्यत इति । नीचैः—अधमैः, जनैरितिशेषः, विघ्नेति—विघ्नात् = अन्तरायात् भयम् = भीतिः तेन, कार्यमिति शेषः, न = नहि, खल्विति निश्चये, प्रारभ्यते = आरभ्यते, मध्याः = मध्यमाः, कार्यं प्रारभ्य = आरभ्य, विघ्नैः = अन्तरायैः विहताः = प्रताडिताः, भूत्वेति शेषः, विरमन्ति = कार्यं त्यजन्ति; किन्तु उत्तमाः गुणाः येषान्ते उत्तमगुणाः = श्रेष्ठाः, महापुरुषाः इति यावत्, विघ्नैः = अन्तरायैः, पुनः पुनः= मुहुर्मुहुः, पदे पदे इति भावः, प्रतिहन्यमानाः = प्रताडिताः सन्तोऽपि, प्रारब्धम् = आरब्धम्; कार्यमिति शेषः, न परित्यजन्ति = न त्यजन्ति, उद्वहन्तीति भावः । त्वं तु महापुरुषः, अतः त्वयाऽपि आरब्धं कार्यं न त्याज्यमिति ध्वनिः ॥१७॥

**टिप्पणी**—**अपरित्याज्यम्**—नञ् + परि + √त्यज् + ण्यत् + विभक्त्यादिकार्यम् ।
**विघ्नभयेन**—वि + √हन् + क + विभक्तिकार्यम्—विघ्नः तस्मात् भयं तेन ।
इस श्लोक में वसन्ततिलका छन्द है । लक्षण—

उक्ता वसन्ततिलका तभजा जगौ गः ॥१७॥

**किं शेषस्येति—**

**अन्वयः**—शेषस्य, वपुषि, किम्, भरव्यथा, न; यत्, एषः, क्ष्माम्, न, क्षिपति; वा, किम्, दिनपतेः, परिश्रमः, न, अस्ति, यत्, निश्चलः, न, आस्ते; किन्तु, श्लाघ्यः,

प्रताडित (होकर) रुक जाते हैं। (किन्तु) उत्तम गुणोंवाले (पुरुष) विघ्नों से फिर-फिर प्रताडित होते हुए भी आरम्भ किये गये (कार्य) को नहीं छोड़ते हैं ॥१७॥

और भी—

शेषनाग के शरीर पर क्या (पृथिवी को धारण करने के) भार की पीड़ा नहीं है, जो कि यह (शेषनाग) पृथिवी को नहीं फेंक देता है; अथवा क्या सूर्य को परिश्रम नहीं होता है, जो कि (यह) स्थिर नहीं होता; (अर्थात् परिश्रम होता है); किन्तु प्रशंसनीय व्यक्ति स्वीकार किये हुए (कार्य) को कायर के समान छोड़ता हुआ लज्जित होता है, क्योंकि (प्रारम्भ कार्य का) निर्वाह (करना)—यह सज्जनों का कुलधर्म है ॥१८॥

---

जनः, अङ्गीकृतम्, (कार्यम्), कृपणवत्, उत्सृजन्, लज्जते; हि, निर्व्यूढम्, एतत्, सताम्, गोत्रव्रतम्, (आस्ते) ॥१८॥

**शब्दार्थः**—शेषस्य = शेषनाग के, वपुषि = शरीर पर, किम् = क्या, भरव्यथा = भार की पीडा, न = नहीं (है), यत् = जो कि, एषः = यह, क्ष्माम् = पृथिवी को, न = नहीं, क्षिपति = फेंक देता है, वा = अथवा, किम् = क्या, दिनपतेः = सूर्य को, परिश्रमः = परिश्रम, न = नहीं, अस्ति = होता है, यत् = जो कि, निश्चलः = स्थिर, न = नहीं, आस्ते = होता; किन्तु = किन्तु, श्लाघ्यः = प्रशंसनीय, जनः = व्यक्ति, अङ्गीकृतम् = स्वीकार किये हुए, (कार्यम् = कार्य को), कृपणवत् = कायर के समान, उत्सृजन् = छोड़ता हुआ, लज्जते = लज्जित होता है; हि = क्योंकि, निर्व्यूढम् = निर्वाह, एतत् = यह, सताम् = सज्जनों का, गोत्रव्रतम् = कुलधर्म, (आस्ते = है) ॥१८॥

**टीका**—**किं शेषस्येति**। शेषस्य = शेषनागस्य, वपुषि = शरीरे, किमितिप्रश्ने, भरस्य = पृथिव्याः भारस्य, व्यथा = पीडा, न = नास्ति, यत् एषः = शेषनागः, क्ष्माम् = पृथिवीम्, न क्षिपति = न पातयति; वा = अथवा, दिनपतेः = सूर्यस्य, परिश्रमः = श्रान्तिः, नास्ति = न भवति, यदेषः सूर्यः, निश्चलः = स्थिरः, गतिविरतः इति भावः, न आस्ते = नास्ति; वस्तुतः शेषस्य व्यथा दिनमणेश्च श्रान्तिरपि भवति; किन्तु श्लाघ्यः = प्रशंसनीयः, जनः = व्यक्तिः, अङ्गीकृतम् = स्वीकृतम्, कार्यमिति शेषः, कृपणवत् = दीनवत्, उत्सृजन् = परित्यजन्, लज्जते = व्रीडामनुभवति; कुतः ? हि = यतः, निर्व्यूढम् = निर्वाहः (भावे क्तः), प्रारब्धस्य कार्यस्य निर्वाहः इत्यर्थः, एतत् = प्रारब्ध-परिपूरणरूपम्, सताम् = सज्जनानाम्, गोत्रव्रतम् = कुलव्रतम्, वंशपरम्पराप्राप्तः धर्मः इति यावत्। अतः भवत्यपि विघ्नैः माभून्निर्वेदः इति भावः ॥१८॥

**टिप्पणी**—**शेषस्य**—पुराणों के अनुसार पृथिवी शेषनाग के मस्तक पर स्थित है।

**उत्सृजन्**—उद् + √सृज् + शतृ + नुमादिकार्यम्।

**निर्व्यूढम्**—निर् + वि + √वह + क्त (भावे) + विभक्तिकार्यम्।

इस श्लोक में अर्थान्तरन्यास अलङ्कार तथा शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥१८॥

**राक्ष०**—सखे, प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेवैतद्भवताम् । ततस्ततः ?

**विरा०**—ततः प्रभृति चन्द्रगुप्तशरीरे सहस्रगुणमप्रमत्तश्चाणक्यहतक एभ्य एतदीदृशं भवतीत्यन्विष्य निगृहीतवान्पुरनिवासिनो युष्मदीयानाप्तपुरुषान् ।

**राक्ष०**—(सोद्वेगम्) कथय, कथय के के निगृहीताः ?

**विरा०**—प्रथमं तावत्क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वासितः ;

**राक्ष०**—(स्वगतम्) एतावत्सह्यम् । न निष्परिग्रहं स्थानभ्रंशः पीडयिष्यति । (प्रकाशम्) वयस्य, कमपराधमुद्दिश्य निर्वासितः ?

**विरा०**—एप राक्षसप्रयुक्तया विपकन्यया पर्वतेश्वरं व्यापादितवानिति ।

**राक्ष०**—(स्वगतम्) साधु कौटिल्य, साधु । स्वस्मिन्—

> **परिहृतमयशः पातितमस्मासु च घातितोऽर्धराज्यहरः ।**
> **एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १९ ॥**

(प्रकाशम्) ततस्ततः ?

---

**शब्दार्थः**—अप्रमत्तः = सावधान, आप्तपुरुषान् = विश्वासपात्र पुरुषों को । सनिकारम् = तिरस्कारपूर्वक । निष्परिग्रहम् = बिना परिवारवाले को । स्थानभ्रंशः = स्थान का परित्याग ॥

**टीका**—अप्रमत्तः = सावधानः, आप्ताः = विश्वस्ताश्च ते पुरुषाः = जनाः इति आप्तपुरुषास्तान् । निकारेण = तिरस्कारेण सहितं सनिकारम् । निर्नास्ति परिग्रहः = परिवारः गार्हस्थ्यं वा यस्य तादृशम् । स्थानभ्रंशः = वासस्थानपरित्यागः ॥

**टिप्पणी**—**निष्परिग्रहम्**—राक्षस सोचता है कि जीवसिद्धि बौद्ध संन्यासी है । उसका कोई परिवार तथा घरद्वार है नहीं । अतः नगर से निर्वासन उसको दुःखी नहीं करेगा ।

**परिहृतमिति**—

**अन्वयः**—(त्वया), अर्द्धराज्यहरः, घातितः; स्वस्मिन्, अयशः, परिहृतम्, अस्मासु, (तत्), पातितम्, च, यस्य, तव, एकम्, अपि, नीतिबीजम्, बहुफलताम्, एति ॥१९॥

**शब्दार्थः**—(त्वया = तुम्हारे द्वारा), अर्द्धराज्यहरः = आधे राज्य को लेनेवाला, घातितः = मार डाला गया; स्वस्मिन् = अपने ऊपर आ पड़ा, अयशः = अपयश, परिहृतम् = दूर कर दिया गया; अस्मासु = हम पर (तत् = वह अपयश), पातितम् = डाल दिया गया; यस्य = जिस, तव = तुम्हारा, एकम् = एक, अपि = भी, नीतिबीजम् = नीतिरूपी बीज, बहुफलताम् = अनेक प्रकार के फलों को, एति = प्राप्त हो रहा है ॥१९॥

**टीका**—**परिहृतमिति** । अत्र स्वस्मिन्निति पदं गद्यभागादादेयम् । त्वया = कौटिल्येन, अर्द्धञ्च तत् राज्यम् अर्द्धराज्यं तत् हरति = आददातीति अर्द्धराज्यहरः = प्रतिज्ञातार्द्धराज्याधिकारीत्यर्थः, पर्वतकः इति यावत्, घातितः = मृत्युं प्रापितः, स्वस्मिन् =

राक्षस—मित्र, आरम्भ किया गया कार्य ( बीच में ही ) छोड़ने के योग्य नहीं होता—यह आपलोगों के सामने ही है (अर्थात् बार-बार विघ्नों के आने पर भी मैं कार्य को नहीं छोड़ रहा हूँ। यह आप लोग देख ही रहे हैं)। उसके बाद ?

विराधगुप्त—तभी से चन्द्रगुप्त की शरीर (की रक्षा) के विषय में हजारगुना सावधान हुए चाणक्य ने 'इन (लोगों) से यह (कार्य) इस प्रकार होता है'—ऐसा सोच कर कुसुमपुर के निवासी आपके विश्वासपात्र पुरुषों को खोज कर पकड़ लिया।

राक्षस—(घबड़ाहट के साथ) बतलाओ, बतलाओ, कौन-कौन पकड़े गये ?

विराधगुप्त—पहले तो बौद्ध भिक्षु जीवसिद्धि तिरस्कारपूर्वक नगर से निकाल दिया गया।

राक्षस—(अपने आप) इतना (तो) बर्दास्त करने के योग्य है। बिना परिवारवाले को स्थान का परित्याग नहीं पीड़ित करेगा। (प्रकट रूप में) मित्र, किस अपराध को लक्ष्य करके निकाला गया ?

विराधगुप्त—इसने राक्षस के द्वारा निर्धारित की गयी विषकन्या से पर्वतेश्वर को मरवा दिया—इसी अपराध को लक्ष्य करके (इति)॥

राक्षस—( अपने आप ) शाबाश कौटिल्य, शाबाश।

( तुम्हारे द्वारा ) आधे राज्य को लेनेवाला (पर्वतेश्वर) मार डाला गया, अपने ऊपर आ पड़ा ( उससे उत्पन्न ) अपयश ( जीवसिद्धि को नगर से निकाल कर ) दूर कर दिया गया, हम पर ( वह अपयश ) डाल दिया गया; जिस तुम्हारा एक भी नीतिरूपी बीज अनेक प्रकार के फलों को प्राप्त हो रहा है (दे रहा है) ॥१९॥

(प्रकट रूप में) उसके बाद ?

---

स्वकीये कार्ये आपतितमिति भावः, अयशः = तदुत्पन्नां दुष्कीर्तिम्, परिहृतम् = जीवसिद्धिं नगरान्निर्वास्य दूरीकृतम्, अस्मासु = मयि तथा जीवसिद्धावित्यर्थः, तदयशः, पातितम् = समर्पितम्, यस्य तव = चाणक्यस्य, अत्र यस्येति पदमनावश्यकं तदभावेऽपि न कापि क्षतिः, एकम् = केवलम्, अपि = सदपि, नीतिः = नयः एव बीजम् = अंकुरकारणम् ('बीजन्तु रेतसि। स्यादाधाने च तत्त्वे च हेतावंकुरकारणे' इति हैमः), बहूनि = अनेकानि, फलानि = परिणामाः यस्य तत् बहुफलं तस्य भावः तां बहुफलताम् = अनेकविधपरिणामभावमित्यर्थः, एति = प्राप्नोति। तव नीतिबीजस्य अर्द्धराज्यहरस्य विनाशेन जनितायाः अपकीर्तेः परिहारः एकं फलम्, अस्मासु तत्पातनं द्वितीयं फलम्, अर्द्धराज्यस्य रक्षणं तृतीयं फलमिति बोध्यम् ॥१९॥

टिप्पणी—इस श्लोक में काव्यलिङ्ग अलंकार तथा आर्या छन्द है। छन्द का लक्षण—

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदशसाऽऽर्या ॥१९॥

**विरा०**—ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।

**राक्ष०**—(सास्रम्) हा सखे, शकटदास, अयुक्तरूपस्तवायमीदृशो मृत्युः । अथवा स्वाम्यर्थमुपरतो न शोच्यस्त्वम् ! वयमेवात्र शोच्या ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

**विरा०**—अमात्य, स्वाम्यर्थ एव साधयितव्य इति प्रयतसे ।

**राक्ष०**—सखे—

**अस्माभिरमुमेवार्थमालम्ब्य न जिजीविषाम ।**
**परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥**

कथ्यतामपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि ।

**विरा०**—एतदुपलभ्य चन्दनदासेनापवाहितममात्यकलत्रम् ।

**राक्ष०**—सखे, क्रूरस्य चाणक्यवटोर्विरुद्धमयुक्तमनुष्ठितं तेन ।

**विरा०**—अमात्य, नन्वयुक्ततरः सुहृद्द्रोहः ।

**राक्ष०**—ततस्ततः ?

---

**शब्दार्थः**—अभिद्रोग्धुम् = द्रोह करने के लिए, विनष्ट करने के लिए, प्रख्याप्य = घोषणा करके । अयुक्तरूपः = अनुचित, अयोग्य । उपरतः = मरे हुए, शोच्यः = शोक के पात्र ॥

**टीका**—अभिद्रोग्धुम् = अभिजिघांसितुम्, प्रख्याप्य = उद्घोष्य । अयुक्तः = अनुचितः, रूपः = प्रकारः यस्य तादृशः । उपरतः = मृतः, शोच्यः = शोचितुं योग्यः ॥

**टिप्पणी**—**अभिद्रोग्धुम्**—अभि + √ द्रुह् + तुमुन् ।

**प्रख्याप्य**—प्र + √ ख्या + ल्यप् + पुगागमे रूपम् ।

**शोच्यः**—√ शुच् + ण्यत् + विभक्तिकार्यम् ॥

**शकटदासः शूलमारोपितः**—विराधगुप्त शकटदास के फाँसी से बच जाने के समाचार से अनभिज्ञ है, क्योंकि उसने पहले ही कुसुमपुर छोड़ दिया था ।

**अस्माभिरिति**—

**अन्वयः**—अमुम्, अर्थम्, एव, अवलम्ब्य, जिजीविषाम्, न, (अवलम्ब्य), कृतघ्नैः, अस्माभिः, परलोकगतः, देवः, न, अनुगम्यते ॥२०॥

**शब्दार्थः**—अमुम् = उसी, अर्थम् = कार्य को, प्रयोजन को, एव = ही, अवलम्ब्य = आश्रय बनाकर, जिजीविषाम् = जीने की इच्छा को, न = नहीं, (अवलम्ब्य = आश्रय बना कर), कृतघ्नैः = अकृतज्ञ, अस्माभिः = हमारे द्वारा, परलोकगतः = परलोक में गये हुए, देवः = महाराज (नन्द), न = नहीं, अनुगम्यते = अनुसरण किये जा रहे हैं ॥२०॥

**टीका**—**अस्माभिरि** । अमुम् = भवदुक्तं स्वाम्यर्थसाधनरूपम्, **अर्थम्** = कार्यम्, प्रयोजनमित्यर्थः, एवेत्यवधारणे, **अवलम्ब्य** = आश्रित्य, तत्सम्पादनार्थमेवेत्यर्थः, जीवि-

**विराधगुप्त**—इसके बाद 'इस ( शकटदास ) के द्वारा चन्द्रगुप्त के शरीर को विनष्ट करने के लिए दारुवर्मा आदि नियुक्त किये गये थे'—नगर में ऐसी घोषणा करके शकटदास शूली पर (फाँसी पर) चढ़ा दिया गया।

**राक्षस**—(आँखों में आँसू भर कर) हाय मित्र शकटदास, तुम्हारी इस तरह की मृत्यु अनुचित है। अथवा स्वामी के लिए मरे हुए तुम शोक करने के योग्य नहीं हो। इस विषय में हम लोग ही शोक करने के योग्य हैं, जो (कि) नन्दकुल के विनाश हो जाने पर भी जीने की इच्छा करते हैं।

**विराधगुप्त**—अमात्य, स्वामी (नन्द) का कार्य ही सम्पादनीय है—इसीलिए (तो आप)—प्रयत्न कर रहे हैं॥

**राक्षस**—मित्र, उसी ( अर्थात् स्वामी के ) कार्य को ही आश्रय बनाकर, जीने की इच्छा को न (आश्रय बनाकर), अकृतज्ञ हमारे द्वारा परलोक में गये हुए महाराज (नन्द) नहीं अनुसरण किये जाते हैं (अर्थात् नन्द के साथ ही हम भी मर गये होते, किन्तु तब शत्रुनाशरूप उनका कार्य न सिद्ध होता। केवल इसी कार्य को सिद्ध करने के लिए ही हम जी रहे हैं, न कि जीने की इच्छा से ॥२०॥

कहो, दूसरी भी ( किसी ) मित्र की विपत्ति को सुनने के लिए तैयार हूँ।

**विराधगुप्त**—इस समाचार को प्राप्त करके चन्दनदास के द्वारा अमात्य (आप) का परिवार (अपने घर से किसी अज्ञातस्थान के लिए) हटा दिया गया।

**राक्षस**—मित्र, उस (चन्दनदास) के द्वारा क्रूर चाणक्य के विरुद्ध व्यर्थ ही (यह) किया गया।

**विराधगुप्त**—अमात्य, मित्रद्रोह (अर्थात् आपके परिवार को चाणक्य के हवाले कर देना) और अधिक अनुचित होता।

**राक्षस**—उसके बाद, उसके बाद ?

---

तुमिच्छा जिजीविषा तां जिजीविषाम् = जीवनेच्छाम्, न = न आश्रित्येत्यर्थः, कृतघ्नैः = अकृतज्ञैः, स्वाम्यननुगमनात् कृतघ्नत्वं बोध्यम्, अस्माभिः = राक्षसादिभिः, नन्दस्नेहभाग्भिरितिभावः, परलोके = स्वर्गे, गतः = प्राप्तः, मृतः इति यावत्, देवः = स्वामी नन्दः, न अनुगम्यते = न अनुस्रियते। स्वामिनं विहाय जीवनेच्छया न जीवामि, अपितु तत्कार्यसम्पादनायैव जीवनं धारयामीति भावः ॥२०॥

**टिप्पणी**—**कृतघ्नैः**—कृत + √हन् + क + तृतीयाबहुवचने विभक्तिकार्यम्।

इस श्लोक में काव्यलिङ्ग अलंकार तथा अनुष्टुप् छन्द है। छन्द का लक्षण—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥२०॥

**शब्दार्थः**—सुहृद्व्यसनस्य = मित्र की विपत्ति के, सज्जः = तैयार। उपलभ्य = प्राप्त कर, जानकर, अपवाहितम् = हटा दिया गया। अयुक्तम् = अनुचित, व्यर्थ, अनुष्ठितम् = किया गया॥

विरा०—ततो याच्यमानेनाप्यनेन न समर्पितममात्यकलत्रं यदा तदातिकुपितेन चाणक्यवटुना—

राक्ष०—(सोद्वेगम्) न खलु व्यापादितः।

विरा०—न हि। गृहीतगृहसारः सपुत्रकलत्रो बन्धनागारे निक्षिप्तः।

राक्ष०—तत्किं परितुष्टः कथयसि अपवाहितं राक्षसकलत्रमिति। ननु वक्तव्यं संयमितः सपुत्रकलत्रो राक्षस इति।

(प्रविश्य)

पुरुषः—जयतु अमात्यः। एष खलु शकटदासः प्रतीहारभूमिमुपस्थितः। (जेदु अमच्चो। एसो क्खु सअडदासो पडिहारभूमिमुवट्ठिदो।)

राक्ष०—भद्र, अपि सत्यम्?

पुरु०—किमलीकममात्यपादेषु विनिवेदयामि। (किं अलिअं अमच्चपादेसु विणिवेदेमि।)

राक्ष०—सखे, विराधगुप्त कथमेतत्?

विरा०—अमात्य, स्यादेतदेवं यतो भव्यं रक्षति भवितव्यता।

राक्ष०—प्रियंवदक, किमद्यापि चिरयसि। क्षिप्रं प्रवेशयैनम्।

पुरु०—यदमात्य आज्ञापयति। (इति निष्क्रान्तः) (जं अमच्चो आणवेदि।)

(ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः)

शक०—(स्वगतम्)

**दृष्ट्वा मौर्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले**
**तल्लक्ष्मीमिव चेतनाप्रमथिनीमुन्मुच्य वध्यस्रजम्।**

---

टीका—सुहृदः मित्रस्य व्यसनस्य = विपत्तेः ('व्यसनं विपदि भ्रंशे दोषे' इत्यमरः), सज्जः = तत्परः। उपलभ्य = प्राप्य, अपवाहितम् = अपसारितम्, अन्यत्र नीतमिति भावः। अयुक्तम् = अनुचितम्, अनुष्ठितम् = कृतम्॥

**टिप्पणी—सज्जः**—√सस्ज् + अच् + विभक्तिकार्यम्।

**अपवाहितम्**—अप् + √विह् + णिच् + क्त + विभक्तिकार्यम्।

**ननुवक्तव्यं राक्षस इति**—राक्षस और चन्दनदास अभिन्न मित्र हैं। चन्दनदास का कैद किया जाना राक्षस अपना ही कैद किया जाना समझ रहा है॥

**शब्दार्थः**—प्रतिहारभूमिम् = दरवाजे पर। अपि = क्या। अलीकम् = असत्य। भव्यम् = भाग्यशाली को, भवितव्यता = होनी॥

**टीका**—प्रतिहारभूमिम् = द्वारदेशम् ('द्वार्द्वारं प्रतीहारः' इत्यमरः)। अपीति प्रश्ने। अलीकम् = असत्यम्। भव्यम् = भाग्यशालिनम्। भवितव्यता = भाग्यम्॥

**टिप्पणी—भव्यम्**—√भू + यत् + विभक्तिकार्यम्।

**भवितव्यता**—√भू + तव्यत्—भवितव्य + तल् + टाप्।

**सखे विराधगुप्त**—आश्चर्य तथा आनन्द के सागर में हिलोरें लेता हुआ भावुक

विराधगुप्त—तब माँगने पर भी जब चन्दनदास ने अमात्य (आप) का परिवार (चाणक्य को) समर्पित नहीं किया तब अत्यन्त क्रुद्ध दुष्ट चाणक्य के द्वारा—

राक्षस—(घबराहट के साथ) मार डाला तो नहीं गया ?

विराधगुप्त—नहीं। ग्रहण कर ली गयी है सम्पत्ति जिसकी ऐसा (वह चन्दनदास) स्त्री-पुत्रादि के सहित कारागार में डाल दिया गया (अर्थात् उसकी सारी सम्पत्ति जब्त करके परिवार के साथ उसे जेल भेज दिया गया)।

राक्षस—तब क्यों सन्तुष्ट होकर कह रहे हो (कि)—राक्षस का परिवार भगा दिया गया। अरे, कहना चाहिए (कि)—(स्वयं) राक्षस स्त्री-पुत्र के साथ बँध गया !!

(प्रवेश करके)

पुरुष—अमात्य, जय हो। यह शकटदास दरवाजे पर उपस्थित है।

राक्षस—भले मानुष, क्या (यह) सत्य है ?

पुरुष—क्या अमात्य के चरणों में असत्य निवेदन करूँगा ?

राक्षस—मित्र विराधगुप्त, यह कैसे ?

विराधगुप्त—अमात्य, सम्भवतः यह ऐसा हो, क्योंकि होनी भाग्यशाली की रक्षा करती है।

राक्षस—प्रियंवदक, क्यों अब भी विलम्ब कर रहे हो ? शीघ्र इसको अन्दर लाओ।

पुरुष—जैसी अमात्य आज्ञा दे रहे हैं। (ऐसा कहकर निकल गया) ॥

(तदनन्तर सिद्धार्थक जिसके पीछे-पीछे चल रहा है ऐसा शकटदास प्रवेश करता है।)

शकटदास—(अपने आप)—

स्थिर शासनवाले चन्द्रगुप्त के समान पृथिवी के ऊपर दृढ़तापूर्वक गड़े हुए शूल को देखकर, चन्द्रगुप्त की लक्ष्मी के समान चेतना को विनष्ट कर देनेवाली वध्यमाला को

---

राक्षस यह भूल गया है कि जिस प्रियंवदक के सामने अभी कुछ क्षणों पूर्व विराधगुप्त के असलियत को छिपाने का नाटक रचा था उसी के सामने अब सब प्रकट हो जाने दे रहा हूँ। यह है राक्षस की दुर्बलता ॥

**दृष्ट्वामौर्यमिवेति—**

**अन्वयः**—प्रतिष्ठितपदम्, मौर्यम्, इव, धरित्र्याः, तले, (प्रतिष्ठितपदम्), शूलम्, दृष्ट्वा, तल्लक्ष्मीम्, इव, चेतनाप्रमथिनीम्, वध्यस्रजम्, उन्मुच्य; स्वाम्यपरोपरौद्रविषमान्, आघाततूर्यस्वनान्, श्रुत्वा; (अपि, यत्), मदीयम्, मनः, न, ध्वस्तम्, (अतः, तत्), प्रथमाभिघातकठिनम्, (आसीत्, इति, अहम्) मन्ये ॥२१॥

**शब्दार्थः**—प्रतिष्ठितपदम् = स्थिर शासनवाले, मौर्यम् = चन्द्रगुप्त के, इव = समान, धरित्र्याः = पृथिवी के, तले = स्थल पर (अर्थात् पृथिवी पर), (प्रतिष्ठितपदम् = दृढ़तापूर्वक गड़े हुए), शूलम् = शूल को, दृष्ट्वा = देखकर; तल्लक्ष्मीम् = चन्द्रगुप्त की

श्रुत्वा स्वाम्यपरोपरौद्रविषमानाघाततूर्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥ २१ ॥

(अवलोक्य सहर्षम्) अयममात्यराक्षसस्तिष्ठति य एषः—

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् ।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २२ ॥

(उपसृत्य) जयत्वमात्यः ।

राक्ष०—(विलोक्य सहर्षम्) सखे शकटदास, दिष्ट्या कौटिल्यगोचरगतोऽपि त्वं दृष्टोऽसि । तत्परिष्वजस्व माम् ।

---

लक्ष्मी के, इव = समान, चेतनाप्रमथिनीम् = चेतना को विनष्ट कर देनेवाली, बेहोश कर देनेवाली, वध्यस्रजम् = वध्यमाला को, उन्मुच्य = धारण कर; स्वाम्यपरोपरौद्रविषमान् = स्वामी के उखाड़ फेंके जाने के समान भयङ्कर एवम् असह्य, आघाततूर्यस्वनान् = वध के (समय बजाये जानेवाले) बाजे के शब्दों को, श्रुत्वा = सुनकर; (अपि = भी, यत् = जो कि), मदीयम् = मेरा, मनः = मन, न = नहीं, ध्वस्तम् = फटा, (अतः = इसलिए, तत् = वह), प्रथमाभिघातकठिनम् = पहले के भयङ्कर कष्टों से कठिन, (आसीत् = था, इति = ऐसा, अहम् = मैं), मन्ये = मानता हूँ ॥२१॥

टीका—दृष्ट्वेति । प्रतिष्ठितेति—प्रतिष्ठितम् = सम्यक् संस्थापितम्, पदम् = मूलम्, राज्यशासनमिति भावः यस्य तादृशम्, मौर्यम् = चन्द्रगुप्तम्, इव = यथा, धरित्र्याः = पृथिव्याः, तले = स्थले, प्रतिष्ठितपदम् = निखातमूलम्, शूलम् = वधसाधनभूतं लौहफलकम्, दृष्ट्वा = अवलोक्य, तस्य = मौर्यस्य, लक्ष्मीम् = राजश्रियम्, इव = यथा, चेतनेति—चेतनायाः = संज्ञायाः, प्रमथिनीम् = विलोपनीम्, वध्यस्रजम् = वध्यमालाम्, उन्मुच्य = परिधाय; स्वाम्यपरोपेति—स्वामिनाम् = प्रभूणाम्, अपरोपः = राज्यभ्रंशः इव, रौद्रविषमान् = भयङ्करान् असह्यांश्च, आघातेति—आहन्यते अत्र इति, आघातः = वध्यभूमिः, हन्तेरधिकरणे घञ्, तस्य तूर्यस्वनाः = पटहध्वनयः तान्, श्रुत्वा = आकर्ण्य; अपि, यत्, मदीयम् = मामकीनम्, मनः = हृदयमित्यर्थः, न ध्वस्तम् = न विशीर्णम्, अतः तत्, प्रथमेति प्रथमाः = पूर्वप्राप्ताः, ये अभिघाताः = अनर्थपरम्पराः नन्दोन्मूलनादिरूपाः, तैः कठिनम् = कठोरम्, आसीदित्यहम्, मन्ये = जाने । यस्मात् पूर्वप्राप्तैः दुःखैः कठिनमतः मे मनः शूलादिकं दृष्ट्वाऽपि न विव्यथे इति भावः ॥२१॥

टिप्पणी—वध्यस्रजम्—पहले जिसको फाँसी की सजा मिलती थी, उसे माला पहना कर बाजा बजाते हुए वधस्थान तक ले जाते थे । उस माला को 'वध्यस्रक्' तथा बाजे को 'आघाततूर्य' कहा जाता था ।

ध्वस्तम्—√ध्वंस् + क्त + विभक्तिकार्यम् ।

इस श्लोक में अलङ्कार उत्प्रेक्षा तथा उपमा की संसृष्टि है । छन्द का नाम है—शार्दूलविक्रीडित । लक्षण—

धारण कर, स्वामी (नन्द) के उखाड़ फेंके जाने के समान भयङ्कर एवम् असह्य वध (के समय बजाये जानेवाले) बाजे के शब्दों को सुनकर (भी जो कि) मेरा मन (कलेजा) नहीं फटा (इसलिए वह) पहले के भयङ्कर कष्टों से कठोर हो गया (था ऐसा मैं) मानता हूँ (अर्थात् नन्दों के राज्यभ्रंश तथा विनाश आदि दुःखों को सहते-सहते मेरा कलेजा वज्र बन गया था। यही कारण है कि फाँसी के दृश्यों को देखकर भी वह नहीं फटा) ॥२१॥

(देखकर प्रसन्नता के साथ) यह अमात्य राक्षस बैठा है, जो यह—

नन्द के विनष्ट हो जाने पर भी अमन्द भक्तिवाला, स्वामी (नन्द) के कार्य को धारण करता हुआ, पृथिवी पर स्वामिभक्तों के अनुपम दृष्टान्त के रूप में स्थित है ॥२२॥

(पास जाकर) अमात्य की जय हो, जय हो।

**राक्षस**—(देखकर प्रसन्नतापूर्वक) मित्र शकटदास, सौभाग्य से, चाणक्य के हाथ में जाकर भी तुम (पुनः) देखे गये हो (अर्थात् जीवित लौट आये हो)। तो मुझे आलिङ्गन करो।

---

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥२१॥

**अक्षीणभक्तिरिति**—

**अन्वयः**—नन्दे, क्षीणे, अपि, अक्षीणभक्तिः, स्वाम्यर्थम्, उद्वहन्, पृथिव्याम्, स्वामिभक्तानाम्, परमे, प्रमाणे, स्थितः ॥२२॥

**शब्दार्थः**—नन्दे = नन्द के, क्षीणे = विनष्ट हो जाने पर, अपि = भी, अक्षीणभक्तिः = अमन्द भक्तिवाला, स्वाम्यर्थम् = स्वामी के कार्य को, उद्वहन् = धारण करता हुआ, ढोता हुआ, पृथिव्याम् = पृथिवी पर, स्वामिभक्तानाम् = स्वामिभक्तों के, परमे = अनुपम, प्रमाणे = दृष्टान्त के रूप में, स्थितः = स्थित है ॥२२॥

**टीका**—**अक्षीणभक्तिरिति**। नन्दे = अस्माकं स्वामिनि इत्यर्थः, क्षीणे = सान्वयं विनष्टे, अपि, अक्षीणा = अमन्दा भक्तिः = श्रद्धा यस्य तादृशः, स्वामिनि विनष्टे स्वार्थाभावात् भक्तिक्षीणाः भवन्ति जनाः, किन्तु राक्षसः यथापूर्वमास्ते इति प्रशंसा; स्वामिनः = प्रभोः नन्दस्येत्यर्थः, अर्थम् = प्रयोजनं कार्यमिति यावत्, उद्वहन् = धारयन्, पृथिव्याम् = भूतले, स्वामिनः = भर्तुः, भक्ताः = श्रद्धासमन्विताः तेषाम्, परमे = उत्कृष्टे, प्रमाणे = दृष्टान्ते, प्रथमकोटौ इत्यर्थः, स्थितः = वर्तमानः अस्ति। राक्षससदृशः स्वामिभक्तियुक्तः सम्प्रति जगति दुर्लभः इत्यर्थः ॥२२॥

**टिप्पणी**—**क्षीणः**—√क्षि + क्त, दीर्घः + विभक्तिकार्यम्।

**उद्वहन्**—उद् + √वह् + शतृ + विभक्त्यादिकार्यम्।

**स्थितः**—√स्था + क्त + विभक्तिकार्यम्।

इस श्लोक में विभावना अलङ्कार तथा अनुष्टुप् छन्द है। छन्द का लक्षण—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥२२॥

( शकटदासस्तथा करोति )

राक्ष०—(चिरं परिष्वज्य) इदमासनमास्यताम् ।

( शकटदासो नाट्येनोपविष्टः)

राक्ष०—सखे शकटदास, अथ कोऽयं मे ईदृशस्य हृदयानन्दस्य हेतुः ?

शक०—(सिद्धार्थकं निर्दिश्य) अनेन प्रियसुहृदा सिद्धार्थकेन घातकान्विद्राव्य वध्यस्थानादपहृतोऽस्मि ।

राक्ष०—(सहर्षम्) भद्र सिद्धार्थक, किं पर्याप्तमिदमस्य प्रियस्य ; तथापि गृह्यताम् । (इति स्वगात्रादवतार्य भूषणानि प्रयच्छति)

सिद्धा०—(गृहीत्वा पादयोर्निपत्य स्वगतम्) अयं खलु आर्योपदेशः । भवतु तथा करिष्यामि । (प्रकाशम्) अमात्य, अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः यत्रेममसात्यस्य प्रसादं निक्षिप्य निर्वृतो भवामि । तस्मादिच्छाम्यहमेतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे स्थापयितुम् । यदा मे प्रयोजनं तदा ग्रहीष्यामि । (अअं खु अज्जोवदेसो । होदु तह करिस्सं । अमच्च एत्थ मे पढमपविट्ठस्स णत्थि कोवि परिचिदो जत्थ एदं अमच्चस्स पसादं णिक्खिविअ णिव्वुदो भविस्सं । ता इच्छामि अहं इमाए मुद्दाए मुद्दिदं अमच्चस्स एव्व भण्डाआरे ठाविदुं । जदा मे पओअणं तदा गह्लिस्सं ।)

राक्ष०—भद्र को दोषः । शकटदास, एवं क्रियताम् ।

शक०—यदाज्ञापयत्यमात्यः । (मुद्रां विलोक्य जनान्तिकम्) अमात्य, भवन्नामाङ्कितेयं मुद्रा ।

राक्ष०—(विलोक्यात्मगतम्) सत्यं नगरान्निष्क्रामतो मम हस्ताद्ब्राह्मण्या उत्कण्ठाविनोदार्थं गृहीता । तत्कथमस्य हस्तमुपागता । (प्रकाशम्) भद्र सिद्धार्थक, कुतस्त्वयेयमधिगता ?

---

**शब्दार्थः**—दिष्ट्या = सौभाग्य से, कौटिल्यगोचरगतः = चाणक्य के हाथ में गया हुआ । परिष्वज = आलिङ्गन करो । विद्राव्य = भगा कर ।

**टीका**—दिष्ट्या = सौभाग्येन, कौटिल्यगोचरगतः—कौटिल्यस्य = चाणक्यस्य, गोचरम् = इन्द्रियविषयताम्, गतः = प्राप्तः, चाणक्यहस्तपतितः इत्यर्थः । परिष्वज = आलिङ्ग । विद्राव्य = अपवाह्य ॥

**टिप्पणी**—**परिष्वजस्व**—परि + √स्वञ्ज + लोट्, षत्वम् ।

**विद्राव्य**—वि = √द्रु + णिच् + ल्यप् ।

**आभूषणानि प्रयच्छति**—ये वे ही आभूषण हैं, जिन्हें मलयकेतु ने अपने शरीर से उतार कर कञ्चुकी के हाथों अभी-अभी भेजा था । इससे चाणक्य की नीति सफल होती हुई दीख पड़ती है ॥

**शब्दार्थः**—आर्योपदेशः = आर्य (चाणक्य) का उपदेश है । प्रसादम् = अनुग्रह को, कृपापूर्वक प्राप्त वस्तु को, निक्षिप्य = रख कर, निर्वृतः = सुखी, निश्चिन्त । मुद्रितम् = अङ्कित । अधिगता = प्राप्त हुई ॥

**सिद्धा०**—अस्ति कुसुमपुरे मणिकारश्रेष्ठी चन्दनदासो नाम। तस्य गेहद्वारपरिसरे पतिता मया आसादिता। (अत्थि कुसुमपुरे मणिआरसेट्ठी चन्दनदासो णाम। तस्स गेहदुआरपडिसरे पडिदा मए आसादिदा।)

**राक्ष०**—युज्यते।

**सिद्धा०**—अमात्य, अत्र किं युज्यते। (अमच्च एत्थ किं युज्जइ।)

**राक्ष०**—भद्र, यन्महाधनानां गृहे पतितस्यैवंविधस्योपलब्धिरिति।

**शक०**—सखे सिद्धार्थक, अमात्यनामाङ्कितेयं मुद्रा। तदितो बहुतरेणार्थेन भवन्तममात्यस्तोपयिष्यति। दीयतामेषा।

**सिद्धा०**—आर्य, ननु प्रसाद एष यदस्या मुद्राया अमात्यः परिग्रहं करोति। (अज्ज णं पसादो एसो जं इमाए मुद्दाए अमच्चो परिग्गहं करेदि।) (इति मुद्रामर्पयति)

**राक्ष०**—सखे शकटदास, अनयैव मुद्रया स्वाधिकारे व्यवहर्तव्यं भवता।

**शक०**—यदाज्ञापयत्यमात्यः।

**सिद्धा०**—अमात्य, किमपि विज्ञापयामि। (अमच्च किंपि विण्णवेमि।)

**राक्ष०**—ब्रूहि विश्रब्धम्।

**सिद्धा०**—जानात्येवामात्यो यथा चाणक्यवटुकस्य विप्रियं कृत्वा नास्ति पुनः पाटलिपुत्रे प्रवेश इति तदिच्छाम्यहममात्यस्य चरणे एव शुश्रूषितुम्। (जाणादि एव्व अमच्चो जह चाणक्कबडुअस्स विप्पिअं कदुअ णत्थि पुणो पाडलिउत्ते पवेसो त्ति ताइच्छामि अहं अमच्चचलणे एव सुस्सूसिदुम्।)

---

**जनान्तिकम्**—यह परस्पर आलाप का एक प्रकार है। समाज में सर्वत्र यह प्रकार नित्य ही देखा जाता है। जहाँ दो से अधिक व्यक्ति होते हैं और बात अन्यों से छिपा कर अपने व्यक्ति से की जाती है—उसे 'जनान्तिक' कहते हैं। ऐसा करते समय नाटक आदि में वक्ता अपने मुख के बगल में हाथ का आड़ कर लेता है—साहित्य-दर्पण में इसकी परिभाषा इस प्रकार है—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम्।
अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्॥

**शब्दार्थः**—गेहद्वारपरिसरे = घर के दरवाजे के समीप में। महाधनानाम् = बड़े धनी लोगों के, उपलब्धिः = प्राप्ति। इतः = इससे (अँगूठी के मूल्य से)। परिग्रहम् = स्वीकार। व्यवहर्तव्यम् = व्यवहार करना चाहिये, कार्य चलाना चाहिये॥

**टीका**—गेहस्य = गृहस्य, द्वारस्य = प्रवेशमार्गस्य, परिसरे = समीपे। महत् = विशालम्, धनम् = द्रविणम् येषाम्, महद्धनानाम् = सम्पत्तिशालिनाम्, उपलब्धिः = प्राप्तिः। इतः = मुद्रामूल्यादित्यर्थः। परिग्रहम् = स्वीकृतिम्। व्यवहर्तव्यम् = व्यवहारः कर्तव्यः, स्वलिखितानि पत्राणि अनयैव अङ्कितानि कर्तव्यानीति भावः॥

**टिप्पणी**—**युज्यते**—चन्दनदास के घर के सामने अँगूठी मिलने की बात को ठीक समझ कर राक्षस कह रहा है कि—यह ठीक ही है। क्योंकि राक्षस ने अपनी पत्नी को उसी के घर में रख छोड़ा था।

**सिद्धार्थक**—कुसुमपुर में चन्दनदास नामवाला जौहरी सेठ है। उसके घर के दरवाजे के समीप में पड़ी हुई (यह अँगूठी) मेरे द्वारा प्राप्त की गयी।

**राक्षस**—ठीक है।

**सिद्धार्थक**—अमात्य, इस विषय में क्या ठीक है?

**राक्षस**—भले आदमी, (यही) कि बड़े धनी लोगों के घर में गिरी हुई इस प्रकार की (वस्तुओं की) प्राप्ति (ठीक ही है।)

**शकटदास**—मित्र सिद्धार्थक, यह अँगूठी अमात्य (राक्षस) के नाम से अङ्कित है। तो इस (अँगूठी के मूल्य) से अधिक धन से आपको अमात्य सन्तुष्ट कर देंगे। यह दे दो॥

**सिद्धार्थक**—आर्य, यह तो कृपा (ही है) कि अमात्य इस अँगूठी को स्वीकार कर रहे हैं। (ऐसा कहकर अँगूठी देता है)।

**राक्षस**—मित्र शकटदास, इसी अँगूठी से आपके द्वारा अपने अधिकार के विषय में व्यवहार करना चाहिये (अर्थात् अपने द्वारा लिखे गये पत्रों पर इसी अँगूठी से मुहर लगाना)॥

**शकटदास**—अमात्य जैसी आज्ञा देते हैं।

**सिद्धार्थक**—अमात्य, कुछ निवेदन करूँगा।

**राक्षस**—विश्वासपूर्वक कहो।

**सिद्धार्थक**—अमात्य जानते ही हैं कि दुष्ट चाणक्य का अहित करके पाटलिपुत्र में (फिर) मेरा प्रवेश नहीं (हो सकता) है, तो मैं अमात्य के ही चरणों की सेवा करना चाहता हूँ।

---

**किमत्र युज्यते**—सब कुछ जानते हुए भी अनजान-सा होकर सिद्धार्थक कुछ अधिक जानकारी के लिए राक्षस से पूछता है कि—अमात्य क्या ठीक है?

**ननु प्रसाद एषः**—सिद्धार्थक का गूढ अभिप्राय यह है कि कृपापूर्वक इस अँगूठी को लेकर आप मुझे अपने अभीप्सित कार्य में सफल बना रहे हैं। यह अँगूठी आगे चलकर चाणक्य का बड़ा कार्य करेगी। जब सिद्धार्थक राक्षस की अँगूठी से मुद्रित पत्र और अलङ्कारों की पेटी लेकर मलयकेतु के पास जायगा, उस समय उस पत्र के विषय में इनकार करना राक्षस के लिए असम्भव हो जायगा। परिणामस्वरूप मलयकेतु किसी भी तरह राक्षस पर विश्वास नहीं करेगा॥

**शब्दार्थः**—विश्रब्धम् = विश्वासपूर्वक। विप्रियम् = अहित को, अप्रिय को। त्वदभिप्रायापरिज्ञानान्तरितः = तुम्हारे अभिप्राय को न जानने से गुप्त (ढका हुआ) था, अस्मदनुनयः = हमारा अनुनय, निवेदन। वृत्तशेषम् = वृत्तान्त के अवशिष्ट भाग को। उपजापम् = फूट का बीज बोकर विद्रोह के लिए भड़काना। बाढम् = अवश्य, यथाप्रकाशम = सामने आने पर। प्रकाशित होने पर। अपक्रमणात् = भाग जाने से।

**राक्ष०**—भद्र, प्रियं नः। किन्तु त्वदभिप्रायापरिज्ञानान्तरितोऽयमस्मदनुनयः। तदेवं क्रियताम्।

**सिद्धा०**—(सहर्षम्) अनुगृहीतोऽस्मि। (अनुगिहिदोम्हि।)

**राक्ष०**—सखे शकटदास, विश्रामय सिद्धार्थकम्।

**शक०**—तथा। (इति सिद्धार्थकेन सह निष्क्रान्तः)

**राक्ष०**—सखे विराधगुप्त, वर्णय वृत्तशेषम्। अपि क्षमन्तेऽस्मदुपजापं चन्द्रगुप्त-प्रकृतयः।

**विरा०**—अमात्य, बाढं क्षमन्ते यथाप्रकाशमनुगच्छन्त्येव।

**राक्ष०**—सखे, किं तत्र प्रकाशम्?

**विरा०**—अमात्य, इदं तत्र प्रकाशम्। मलयकेतोरपक्रमणात्प्रभृति कुपितश्चन्द्रगुप्तश्चाणक्यस्योपरीति चाणक्योऽप्यतिजितकाशितयासहमानश्चन्द्रगुप्तं तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतःपीडानुपचिनोतीति। इत्थमपिममानुभवः।

**राक्ष०**—(सहर्षम्) सखे विराधगुप्त, गच्छ त्वमनेनैवाहितुण्डिकच्छद्मना पुनः कुसुमपुरम्। तत्र मे प्रियसुहृद्वैतालिकव्यञ्जनः स्तनकलशो नाम प्रतिवसति। स त्वया मद्वचनाद्वाच्यः यथा चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः कार्यं चातिनिभृतं करभकहस्तेन सन्देष्टव्यमिति।

**विरा०**—यदाज्ञापयत्यमात्यः। (इति निष्क्रान्तः)

(प्रविश्य)

**पुरुषः**—जयतु अमात्यः! अमात्य, शकटदासो विज्ञापयति एते खलु त्रयोऽलङ्कार-संयोगा विक्रीयन्ते। तान् प्रत्यक्षीकरोत्वमात्य इति। (जेदु अमच्चो। अमच्च सअडदासो विण्णवेदि एदे खु तिण्णि अलङ्कारसञ्जोआ विक्कीअन्दि। ते पच्चक्खीकरेदु अमच्चो।)

**राक्ष०**—(विलोक्यात्मगतम्) अहो महार्हाण्याभरणानि। (प्रकाशम्) भद्र, उच्यतामस्मद्वचनाच्छकटदासः परितोष्य विक्रेतारं गृह्यन्तामिति।

---

**टीका**—विश्रब्धम् = विश्वासपूर्वकम्। विप्रियम् = अहितम्। तव = भवतः, अभिप्रायस्य = आन्तरिकेच्छायाः, अपरिज्ञानेन = अज्ञानेन, अन्तरितः = अस्फुटः, अप्रकाशितः, अकथितः इति भावः, अस्माकम् अनुनयः अस्मदनुनयः = अस्माकं प्रार्थना, त्वमत्रैव निवासं कृत्वा अस्मत्साहाय्यं कुर्विति रूपा। वृत्तस्य = वर्णनीयस्य समाचारस्य शेषम् = अवशिष्टम्। उपजापम् = भेदम् ('भेदोपजापौ' इत्यमरः)। बाढम् = अवश्यम्, स्वीकारे अव्ययम्, प्रकाशमनतिक्रम्येति यथाप्रकाशम् = प्रकटितार्थानुरूपम्॥

**टिप्पणी**—**पाटलिपुत्रे**—मगध की राजधानी कुसुमपुर पाटलिपुत्र भी कही जाती थी। यही आधुनिक पटना है।

**त्वदभिप्रायापरिज्ञानेति**—भाव यह है कि—तुम्हारे कहने से पहले ही हमें तुमसे इस तरह की प्रार्थना करनी चाहिये थी, किन्तु ऐसा मैं इसलिए न कर सका कि तुम्हारी भावना मुझे ज्ञात न थी।

**राक्षस**—मित्र, इसे पसन्द है (अर्थात् मैं भी यही कहना चाहता हूँ)। किन्तु तुम्हारे अभिप्राय को न जानने से (इसी बात के लिए) मेरी ओर से निवेदन न किया जा सका। तो ऐसा ही करो (अर्थात् मेरी ही सेवा में रहो)।

**सिद्धार्थक**—(प्रसन्नतापूर्वक) कृतार्थ हो गया।

**राक्षस**—मित्र शकटदास, सिद्धार्थक को विश्राम कराओ।

**शकटदास**—जैसी आज्ञा (ऐसा कहकर सिद्धार्थक के साथ निकल गया)।

**राक्षस**—मित्र विराधगुप्त, वृत्तान्त के अवशिष्ट भाग को कहो। क्या चन्द्रगुप्त की प्रजाएँ हमारे द्वारा फूट का बीज बोकर भड़काने की बात को बर्दास्त करती हैं?

**विराधगुप्त**—अमात्य, अवश्य सहन करती हैं (और) चाणक्य तथा चन्द्रगुप्त के परस्पर विरोध के प्रकाशित होने पर अनुसरण ही करती हैं (अर्थात् हमारे कहने के अनुसार कार्य करती हैं)।

**राक्षस**—मित्र, वहाँ (कुसुमपुर में) क्या प्रकाश में आया है?

**विराधगुप्त**—अमात्य, वहाँ यह प्रकाश में आया है कि मलयकेतु के भागने के समय से ही चन्द्रगुप्त चाणक्य के ऊपर कुपित है। चाणक्य भी विजय से अत्यन्त गर्वीला होने के कारण चन्द्रगुप्त को बर्दास्त न करता हुआ (चन्द्रगुप्त की) उन-उन आज्ञाओं को मानने से अस्वीकार कर देने के कारण चन्द्रगुप्त के चित्त की पीड़ा को उत्पन्न कर रहा है। ऐसा भी मेरा अनुभव है।

**राक्षस**—(प्रसन्नतापूर्वक) मित्र विराधगुप्त, इसी सँपेरे के बहाने से तुम पुनः कुसुमपुर जाओ। वहाँ भाट के वेशवाला (अर्थात् भाट बना हुआ) स्तनकलश नामक हमारा प्रिय-मित्र निवास करता है। तुम उसको मेरी तरफ से कहना कि चाणक्य के द्वारा (चन्द्रगुप्त की) आज्ञाओं के भंग किये जाने पर उत्तेजित करने में समर्थ श्लोकों के द्वारा चन्द्रगुप्त की स्तुति की जानी चाहिये और (अपने) कार्य को अत्यन्त गुप्त रूप से करभक के हाथ (मेरे पास) भेजना चाहिये।

**विराधगुप्त**—अमात्य जैसी आज्ञा देते हैं (वैसा ही होगा)।

(ऐसा कहकर निकल गया)।

(प्रवेश करके)

**पुरुष**—अमात्य विजयी बनें। अमात्य, शकटदास निवेदन कर रहे हैं (कि)—यह सुन्दर आभूषणों के तीन सेट बेचे जा रहे हैं। अमात्य उन्हें देख लें।

**राक्षस**—(देखकर अपने आप) अहो, बहुमूल्य आभूषण हैं। (प्रकट रूप में) भले आदमी, मेरी ओर से शकटदास कहे जायँ कि बेचनेवाले को (मूल्य से) सन्तुष्ट करके ये आभूषण ले लिये जायँ॥

---

**अनुगच्छन्त्येव**—चाणक्य ने मलयकेतु की उपेक्षा की। अतः चन्द्रगुप्त का प्रजा-वर्ग उसे कृतघ्न समझने लगा है। परिणामस्वरूप भद्रभट आदि चन्द्रगुप्त को छोड़कर मलयकेतु के पास चले आये हैं। यह हमारे उपजाप का ही परिणाम है॥

**शब्दार्थः**—वैतालिकव्यञ्जनः = भाट के वेषवाला। समुत्तेजनसमर्थैः = उत्तेजित

पुरु०—तथा। (तह) (इति निष्क्रान्तः)

राक्ष०—यावदहमपि कुसुमपुराय करभकं प्रेषयामि। (उत्थाय) अपि नाम दुरात्मनश्चाणक्याच्चन्द्रगुप्तो भिद्येत। अथवा सिद्धमेव नः समीहितं पश्यामि। कुतः ?—

मौर्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्तते
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं
सौहार्दात्कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥२३॥

---

करने में समर्थ। उपश्लोकयितव्यः=स्तुति (प्रशंसा) की जानी चाहिये। अतिनिभृतम्=अत्यन्त गुप्त रूप से। अलङ्कारसंयोगाः=सुन्दर आभूषणों का सेट। महार्हाणि=बहुमूल्य ॥

टीका—वैतालिकेति—वैतालिकस्य=स्तुतिपाठकस्य, व्यञ्जनम्=लाञ्छनम्, चिह्नमित्यर्थः, ('व्यञ्जनं लाञ्छने' इत्यमरः) इव व्यञ्जनं यस्य तादृशः। समुत्तेजनेति—समुत्तेजने=मन्युदीपने, समर्थाः=योग्याः तैः। उपश्लोकयितव्यः=उपस्तोतव्यः। अतिनिभृतम्=अतिगुप्तम्, क्रियाविशेषणमेतत्। अलंक्रियते एभिः इति अलम्+√कृ+घञ् करणे अलंकाराः तेषां संयोगाः अलंकारसंयोगाः=सम्यक् निर्मितानि आभूषणानि। महार्हाणि=बहुमूल्यानि ॥

टिप्पणी—वैतालिकव्यञ्जनः—वस्तुतः यह वैतालिक नहीं हैं, अपितु वैतालिक का वेष बना रखा है। वैतालिक लोग वीरता एवं प्रशंसा भरे श्लोकों को सुना-सुनाकर राजाओं को उत्तेजित करते तथा प्रातःकाल जगाते थे।

उपश्लोकयितव्यः—उप+√श्लोक+णिच् (नामधातु)+तव्य+विभक्तिकार्यम्।

त्रयोऽलङ्कारसंयोगाः—ये पर्वतक के वे ही अलंकार हैं जिन्हें चन्द्रगुप्त ने चाणक्य के द्वारा भेजे गये ब्राह्मणों को दान दिया था। वे कोरे ब्राह्मण ही न थे अपितु चाणक्य के गुप्तचर भी थे। अब चाणक्य की योजना के अनुसार उनमें से एक विश्वावसु—ही आभूषणों को बेचने आया है। इन्हें ही पहन कर राक्षस मलयकेतु के पास जायगा। इस प्रकार राक्षस और मलयकेतु में फूट हो जायगी। आगे फिर इनका वर्णन आएगा ॥

मौर्यस्तेजसीति—

अन्वयः—मौर्यः, सर्वभूतलभुजाम्, आज्ञापकः, (भूत्वा), तेजसि, वर्तते, चाणक्यः, अपि, 'मदाश्रयात्, अयम्, राजा, अभूत्' इति, जातस्मयः, (आस्ते), (अतः) राज्यप्राप्तिकृतार्थम्, एकम्, तीर्णप्रतिज्ञार्णवम्, अपरम्, (च), लब्धान्तरा, कृतकृत्यता, एव, नियतम्, सौहार्दात्, भेत्स्यति ॥२३॥

शब्दार्थः—मौर्यः=चन्द्रगुप्त मौर्य, सर्वभूतलभुजाम्=सभी राजाओं को, आज्ञा-

पुरुष—जैसी आज्ञा। (ऐसा कहकर चला गया)

राक्षस—तब तक मैं भी करभक को कुसुमपुर भेजता हूँ। (उठकर) क्या दुरात्मा चाणक्य से चन्द्रगुप्त अलग किया जा सकेगा? अथवा अपने मनोरथ को पूर्ण हुआ ही देखता हूँ :

क्योंकि—चन्द्रगुप्त मौर्य सभी राजाओं को आज्ञा देनेवाला (अर्थात् सम्राट्) होकर तेजस्विता में है, चाणक्य भी 'मेरा आश्रय लेने के कारण यह (चन्द्रगुप्त) शासक हुआ है'—ऐसा सोचकर गर्वीला (हो गया है); (इसलिए) राज्य के मिल जाने से सफल एक (अर्थात् चन्द्रगुप्त) को (तथा) पार कर लिया है प्रतिज्ञारूपी सागर को जिसने ऐसे दूसरे (अर्थात् चाणक्य) को अवसर पाकर कार्य की समाप्ति ही अवश्य (परस्पर) मित्रता से पृथक् कर देगी (अर्थात् परस्पर स्वार्थ के न रह जाने से चाणक्य एवं चन्द्रगुप्त अवश्य ही अब मित्र न रह जायेंगे ॥२३॥

---

पकः = आज्ञा देनेवाला, (भूत्वा = होकर), तेजसि = तेजस्विता में, वर्तते = है, चाणक्यः = चाणक्य, अपि = भी, 'मदाश्रयात् = मेरे भरोसे, मेरा आश्रय लेने के कारण, अयम् = यह (चन्द्रगुप्त), राजा = शासक, अभूत् = हुआ है', इति = ऐसा सोचकर, जातस्मयः = गर्वीला, (आस्ते = हो गया है), (अतः = इसलिए), राज्यप्राप्ति-कृतार्थम् = राज्य के मिल जाने से सफल, एकम् = एक को (अर्थात् चन्द्रगुप्त मौर्य को), तीर्णप्रतिज्ञार्णवम् = पार कर लिया है प्रतिज्ञारूपी सागर को जिसने ऐसे, अपरम् = दूसरे को, (अर्थात् चाणक्य को), लब्धान्तरा = अवसर पायी हुई, (अर्थात् अवसर पाकर), कृतकृत्यता = कार्य की समाप्ति, एव = ही, नियतम् = अवश्य, सौहार्दात् = (परस्पर) मित्रता से, भेत्स्यति = पृथक् कर देगी ॥२३॥

टीका—मौर्यस्तेजसीति। मौर्यः = चन्द्रगुप्तः इत्यर्थः, सर्वे = निखिलाश्चते भूतल-भुजश्च = राजानश्च तेषां सकलनृपतीनामित्यर्थः, आज्ञापकः = शासनकर्ता, सम्राडिति यावत्, भूत्वेति शेषः, तेजसि = प्रतापे, वर्तते = आस्ते, राजमदपरिपूर्णस्तिष्ठतीति भावः, चाणक्यः = कौटिल्योऽपि, 'मदाश्रयात् = मम साहाय्यात्, मामाश्रित्येत्यर्थः, अयम् = चन्द्रगुप्तः, राजा = शासकः, अभूत् = जातः' इति = अस्मात् कारणात्, जातः = उत्पन्नः स्मयः = गर्वः यस्य तादृशः, सञ्जातगर्वः इत्यर्थः, आस्ते इति शेषः। अतः राज्यप्राप्तीति—राज्यस्य प्राप्त्या = लाभेन कृतार्थः = कृतकृत्यः, सफलः इत्यर्थः, तादृशम्, एकम् = चन्द्रगुप्तमित्यर्थः, तीर्णेति—तीर्णः = उत्तीर्णः प्रतिज्ञा = शत्रुनाशरूपः प्रणः, सा एव अर्णवः = सागरः येन तादृशस्तम्, पूर्णप्रतिज्ञमिति यावत्, अपरम् = अन्यम्, चाणक्यमित्यर्थः, च, लब्धेति—लब्धः = प्राप्तः अन्तरः = अवकाशः यया तादृशी, प्राप्तावसरेति यावत्, कृतकृत्यता = चरितार्थता, स्वस्वकार्ये सफलतेति यावत्, एव = हि, नियतम् = अवश्यम्, सौहार्दात् = मित्रभावात्, भेत्स्यति = विघटयिष्यति। सिद्धे मनोरथे सम्प्रति स्वार्थाभावे चाणक्यचन्द्रगुप्तौ सौहार्दात् वियुक्तौ भविष्यतः इति भावः ॥२३॥

॥ राक्षसविचारोनाम द्वितीयोऽङ्कः समाप्तः ॥

(इति निष्क्रान्ताः सर्वे)

इति राक्षसविचारो नाम द्वितीयोऽङ्कः ।

---

टिप्पणी—**समाहितम्**—मनोरथ, चाणक्य और चन्द्रगुप्त की फूट, सम् + √ईह् + क्त + विभक्तिकार्यम् ।

**कृतकृत्यता**—जिनका परस्पर कुछ भी सम्बन्ध नहीं होता ऐसे भी व्यक्ति स्वार्थ-सिद्धि के लिए घनिष्ठ बन जाते हैं। स्वार्थसिद्धि हो जाने पर उनकी घनिष्ठता नष्ट हो जाती है। चाणक्य ने नन्दों के विनाश की प्रतिज्ञा की थी। अतः अपनी प्रतिज्ञापूर्ति के लिए उसे चन्द्रगुप्त की आवश्यकता थी। चन्द्रगुप्त को नन्द का राज्य चाहिये था। अतः उसे नन्द के शत्रु चाणक्य की अपेक्षा थी। अतः दोनों मिल गये थे। किन्तु अब स्वार्थ की पूर्ति होने से अवश्य ही दोनों परस्पर अलग हो जायँगे।

इस श्लोक में यथासंख्य नामक अलंकार तथा शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥२३॥

॥ राक्षसविचारनामक दूसरा अङ्क समाप्त ॥

---

# तृतीयोऽङ्कः

(ततः प्रविशति कञ्चुकी)

कञ्चुकी—(सनिर्वेदम्)

रूपादीन्विषयान्निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि ते
न्यस्तं मूर्ध्नि पदं तवैव जरया तृष्णे मुधा ताम्यसि ।। १ ।।

(परिक्रम्याकाशे) भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति । प्रवृत्तकौमुदीमहोत्सवरमणीयतरं कुसुमपुरमवलोकयितुमिच्छामि । तत्संस्क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादोपरिभूमय इति । (पुनराकाशे) किं ब्रूथ । आर्य, किमविदित एवायं देवस्य कौमुदीमहोत्सवप्रतिषेध इति । आः दैवोपहताः किमनेन वः सद्यःप्राणहरेण कथोपोद्घातेन । शीघ्रमिदानीम्—

---

रूपादीनिति—

अन्वयः—हे तृष्णे, यैः, (चक्षुरादिभिः), करणैः, रूपादीन्, विषयान्, निरूप्य, त्वया, आत्मलाभः, लब्धः, तेषु, चक्षुरादिषु, अपि, स्वार्थावबोधक्रियाः, हताः, ते, आज्ञाविधेयानि, अङ्गानि, प्रसभम्, पटुताम्, त्यजन्ति, जरया, तव, एव, मूर्ध्नि, पदम्, न्यस्तम्, मुधा, ताम्यसि ।।१।।

शब्दार्थः—हे तृष्णे = हे लालच, यैः = जिन, (चक्षुरादिभिः = चक्षु आदि), करणैः = ज्ञानेन्द्रियों से, रूपादीन् = रूप आदि, विषयान् = विषयों को, निरूप्य = प्राप्त करके, त्वया = तुम्हारे द्वारा, आत्मलाभः = जन्म प्राप्त किया गया, अस्तित्व पाया गया, तेषु = उन, चक्षुरादिषु = चक्षु आदि में, अपि = भी, स्वार्थावबोधक्रियाः = अपने-अपने विषयों के ज्ञान को प्राप्त करने की क्रियाएँ, हताः = नष्ट हो गयीं, ते = तुम्हारी, आज्ञाविधेयानि = आज्ञा का पालन करनेवाले, अङ्गानि = अङ्ग (अर्थात् कर्मेन्द्रिय), प्रसभम् = हठात्, पटुताम् = दक्षता को, त्यजन्ति = छोड़ रही हैं; जरया = वृद्धावस्था के द्वारा, तव = तुम्हारे, एव = ही, मूर्ध्नि = मस्तक पर, पदम् = पैर, न्यस्तम् = रखा गया है, मुधा = व्यर्थ ही, ताम्यसि = चञ्चल हो रही हो, व्याकुल हो रही हो ।।१।।

टीका—रूपादीनिति । हे तृष्णे = हे स्पृहे ('तृष्णे स्पृहापिपासे द्वे' इत्यमरः), यैः करणैः = चक्षुरादिभिः ज्ञानेन्द्रियैः, रूपादीन्—रूपः आदिः येषां तान् रूपादीन् = रूपरसगन्धस्पर्शशब्दानित्यर्थः, विषयान् = ज्ञानेन्द्रियग्राह्यान् पदार्थान्, निरूप्य = भोग्यतयावधार्य, प्राप्येति यावत्, त्वया = त्वया तृष्णयेत्यर्थः, आत्मलाभः = आत्मोपलब्धिः,

# तीसरा अङ्क

(इसके बाद कंचुकी प्रवेश करता है)

कञ्चुकी—(खेद के साथ)—

हे तृष्णे, जिन (चक्षु आदि) ज्ञानेन्द्रियों से रूप आदि विषयों को प्राप्त करके तुम्हारे द्वारा अस्तित्व प्राप्त किया गया उन चक्षु आदि में भी अपने-अपने विषयों के ज्ञान को प्राप्त करने की क्रियाएँ नष्ट हो गयीं, तुम्हारी आज्ञा का पालन करनेवाले अंग (अर्थात् कर्मेन्द्रिय) हठात् (अपने कार्य की) दक्षता को छोड़ रहे हैं, वृद्धावस्था के द्वारा तुम्हारे ही मस्तक पर पैर रखा गया है, (तुम) व्यर्थ ही चञ्चल हो रही हो। (अर्थात् वृद्धावस्था ने हमारी इन्द्रियों को विगलित कर दिया है। अब मैं तृष्णावश विषयों के पीछे-पीछे दौड़ नहीं सकता। फिर भी तृष्णा मुझे परेशान ही कर रही है। किन्तु उसका यह कार्य निष्फल है) ॥१॥

(चारों ओर घूमकर, आकाश की ओर देखकर) हे हे सुगाङ्ग नामक राजमहल के अधिकारी पुरुषों प्रातः स्मरणीय नामवाले महाराज चन्द्रगुप्त आप लोगों को आज्ञा देते हैं—"प्रचलित कौमुदी महोत्सव से अत्यन्त रमणीय कुसुमपुर को देखना चाहता हूँ। तो हमारे देखने के योग्य सुगाङ्ग राजमहल के ऊपर के स्थान सजा दिये जायँ।" (फिर आकाश में) क्या कह रहे हो—'आर्य, क्या महाराज को (चाणक्य के द्वारा किया गया) यह कौमुदी महोत्सव (को मनाये जाने) का प्रतिषेध अज्ञात ही है?' आः भाग्य के मारों, शीघ्र ही प्राणों को विनष्ट कर देनेवाले कथा के इस उद्घाटन से तुम लोगों का क्या (मतलब)? ॥

---

उत्पत्तिरिति यावत्, लब्धः = प्राप्तः, तेषु = तव आत्मोपलब्धिस्थलेषु, चक्षुरादिषु = चक्षुःप्रभृतिषु, दृष्टिरसनाघ्राणत्वच्छ्रोत्रेष्वित्यर्थः, अपि, स्वार्थस्य = निजविषयस्य रूपादेः यः अवबोधः = ज्ञानम् तद्रूपाः क्रियाः = व्यापाराः, स्वविषयग्रहणसामर्थ्यमिति भावः, हताः = विनष्टाः, ते = तव, आज्ञायाः = आदेशस्य, विधेयानि = वशम्बदानि, अङ्गानि = कर्मेन्द्रियाणीत्यर्थः, प्रसभम् = हठात्, पटुताम् = पाटवम्, सामर्थ्यमिति यावत्, त्यजन्ति = मुञ्चन्ति, जरया = वृद्धावस्थया, तवैव = सर्वलोकशासिकायाः तव एवेत्यर्थः, मूर्ध्नि = मस्तके, पदम् = चरणम्, न्यस्तम् = अर्पितम्, अतः त्वं मुधा = व्यर्थमेव, ताम्यसि = माद्यसि। सर्वलोकस्य शिरसि त्वया पदं न्यस्यते किन्तु सम्प्रति वार्धक्येन तवैव मस्तके पदं स्थाप्यते। तस्य समक्षं तव सामर्थ्यं न प्रभविष्यतीति भावः ॥१॥

**टिप्पणी—सनिर्वेदम्**—निर्वेदेन = खेदेन सहितं सनिर्वेदं यथा स्यात्तथा, स + निर् + $\sqrt{}$ विद् + घञ् + विभक्तिकार्यम्।

**करणैः, अङ्गानि**—यहाँ करण का अर्थ है—ज्ञानेन्द्रिय और अंग का अर्थ है—कर्मेन्द्रिय।

इस श्लोक में समासोक्ति तथा विभावना अलंकार एवं शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

आलिङ्गन्तु गृहीतधूपसुरभीन्स्तम्भान्पिनद्धस्रजः
संपूर्णेन्दुमयूखसंहतिरुचां सच्चामराणां श्रियः।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥१॥

**शब्दार्थः**—सुगाङ्गप्रासादाधिकृताः = हे सुगाङ्ग नामक राजमहल के अधिकारियों (नियुक्त पुरुषों), सुगृहीतनामा = प्रातः स्मरणीय नामवाले। प्रवृत्तकौमुदीमहोत्सवरमणीयतरम् = प्रचलित कौमुदी महोत्सव से अत्यन्त रमणीय। संस्क्रियन्ताम् = सजा दिये जायँ। अविदितः = अज्ञात। दैवापहताः = भाग्य के मारे हुए व्यक्तियों, अभागों, सद्यः = शीघ्र, प्राणहरेण = प्राणों को विनष्ट कर देनेवाले, कथोपोद्घातेन = कथा के उद्घाटन से, कथा की चर्चा से ॥

**टीका**—सुगाङ्गप्रासादे = सुगाङ्गनाम्नि राजभवने अधिकृताः = नियुक्ताः, सुगृहीतम् = प्रातः स्मरणीयम् नाम = अभिधानम् यस्य असौ। 'स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते।' प्रवृत्तेति—प्रवृत्तः = प्रचलितः यः कौमुदी महोत्सवः = शारदीपूर्णिमामहोत्सवः तेन रमणीयतरम् = अतिसुन्दरम्। संस्क्रियन्ताम् = अलंक्रियन्ताम्। अविदितः = अज्ञातः। दैवेन = भाग्येन, उपहताः = ताडिताः, भाग्यहीनाः इत्यर्थः, सद्यः = झटिति, प्राणहरेण = प्राणविनाशकेन, कथायाः = प्रतिषेधवार्तायाः, उपोद्घातेन = उद्घाटनेन, कथनेनेति यावत्। अनेन कथनेन क्रुद्धो राजा झटिति युष्माकं प्राणान् नाशयिष्यतीति तात्पर्यार्थः ॥

**टिप्पणी**—**प्रतिषेधः**—प्रति + √सिध् + घञ् + विभक्तिकार्यम्।

चन्द्रगुप्त ने कौमुदी महोत्सव को मनाने का आदेश दिया है। चाणक्य ने उसे मनाने से लोगों को मना कर दिया है। यह सब चाणक्य की कूटनीति है। उसने चन्द्रगुप्त से बनावटी कलह करने की योजना बना रखी है। इससे राक्षस तथा उसके गुप्तचर धोखे में पड़ेंगे ॥

**कौमुदीमहोत्सवः**—यह महोत्सव शरद् ऋतु के आश्विन या कार्तिक की पूर्णिमा की रात्रि में मनाया जाता था। आश्विन और कार्तिक की पूर्णिमा को कौमुदी कहते हैं।

**सद्यः प्राणहरेण**—तुम लोग अभागे हो जो ऐसा कह रहे हो। क्योंकि जब महाराज चन्द्रगुप्त तुम लोगों की इस बात को सुनेंगे तो अवश्य ही मार डालने का आदेश देंगे। अतः जो महाराज की आज्ञा हो उसे करो। अन्य बातों से तुम लोगों को क्या लेना-देना है ॥

**आलिङ्गन्त्विति**—

**अन्वयः**—सम्पूर्णेन्दुमयूखसंहतिरुचाम्, सच्चामराणाम्, श्रियः, पिनद्धस्रजः, गृहीतधूपसुरभीन्, स्तम्भान्, आलिङ्गन्तु; च, सकुसुमः, चन्दनवारिणा, सेकः, सुचिरम्, सिंहाङ्कासनधारणात्, सञ्जातमूर्च्छाम्, इव, गाम्, क्षिप्रम्, अनुगृह्णातु ॥२॥

शीघ्र इसी समय—

पूर्णिमा के चन्द्रमा की किरणों के पुञ्ज के समान चमकवाले उत्तम चामरों की कान्तियाँ, बाँधी हुई मालाओंवाले, धूप से सुगन्धित खम्भों को आलिङ्गित करें (अर्थात् खम्भों को मालाओं तथा चामरों से लपेट कर उनमें जलती हुई धूपबत्तियाँ लगा दी जायँ)। और फूलों से मिश्रित चन्दन के जल से (किया गया) छिड़काव, बहुत दिनों से सिंहासन को धारण करने के कारण मूर्च्छित-सी पृथिवी को शीघ्र अनुगृहीत करे (अर्थात् चन्दन के जल में सुगन्धित फूलों को मिलाकर पृथिवी पर छिड़काव कर दो) ॥२॥

---

**शब्दार्थः**—सम्पूर्णेन्दुमयूखसंहतिरुचाम् = पूर्णिमा के चन्द्रमा की किरणों के पुञ्ज के समान कान्तिवाले (चमकवाले), सच्चामराणाम् = उत्तम चामरों की, श्रियः = कान्तियाँ, पिनद्धस्रजः = बाँधी हुई मालाओंवाले, गृहीतधूपसुरभीन् = ग्रहण किया है धूप की सुगन्ध को जिन्होंने ऐसे, अर्थात् धूप से सुगन्धित, स्तम्भान् = खम्भों को, आलिङ्गन्तु = आलिङ्गित करें; च = तथा, सकुसुमः = पुष्पों से मिश्रित, चन्दनवारिणा = चन्दन के जल से, सेकः = छिड़काव, सुचिरम् = बहुत दिनों से, सिंहाङ्कासनधारणात् = सिंह के चिह्न से युक्त आसन (अर्थात् सिंहासन) के धारण करने के कारण, सञ्जातमूर्च्छाम् = उत्पन्नमूर्च्छावाली (अर्थात् मूर्च्छित), इव = सी, गाम् = पृथिवी को, क्षिप्रम् = शीघ्र, अनुगृह्णातु = अनुगृहीत करे ॥२॥

**टीका—सम्पूर्णेन्द्विति** । सम्पूर्णेति—सम्पूर्णः = समस्तकलायुक्तः यः इन्दुः = चन्द्रः तस्य मयूखाः = चन्द्रिकाः तेषां या संहतिः = समवायः तस्या रुक् = कान्तिः इव रुक् = कान्तिः येषां तादृशानाम्, चन्द्रकिरणधवलानामित्यर्थः; सच्चामराणाम् = चमरीश्रेष्ठपुच्छानाम्, वालव्यजनामित्यर्थः, श्रियः = कान्तयः, पिनद्धाः = अवबद्धाः स्रजः = पुष्पमालिकाः येषु तादृशान्, गृहीताः = सेविताः ये धूपाः तैः सुरभीन् = सुगन्धयुक्तान्, स्तम्भान् = गृहस्थूणाः, ('स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरः) सुगाङ्गप्रासादस्येति शेषः, आलिङ्गन्तु = उपश्लिष्यन्तु; स्तम्भेषु स्रजः चामरांश्च बद्ध्वा धूपसंयोजनं कुरुतेति भावः। श्रियः स्तम्भानालिङ्गन्त्विति कथनेन राज्यश्रिया चन्द्रगुप्तोऽपि आलिंगितः इति स्त्रीविषयकोऽनुरागातिशयः सूच्यते। च = तथा, कुसुमैः = पुष्पैः सहितः सकुसुमः = पुष्पमिश्रितः, चन्दनवारिणा = मलयजजलेन, सेकः = सिञ्चनम्, सुचिरम् = बहुकालम्, सिंहस्य अंकः = चिह्नम् यस्मिन् तच्च तदासनम् = राजासनम् तस्य सिंहासनस्येत्यर्थः धारणात् = वहनात्, सञ्जातेति—सञ्जाता = उत्पन्ना मूर्च्छा = चेतनाशून्यता यस्यां तादृशीमिव, गाम् = पृथिवीम्, क्षिप्रम् = झटिति, अनुगृह्णातु = सम्भावयतु। झटिति सुगन्धिपूर्णेन जलेन भूमौ सेकः कार्यः इति निर्गलितार्थः। अधार्मिकस्य नन्दस्य सिंहासनधारणात् विगतचेतनेव पृथिवी चन्द्रगुप्तस्य स्नेहप्रदानात् झटिति अनुगृहीता भविष्यतीति ध्वनितम् ॥२॥

**टिप्पणी—सेकः**—√सिच् + घञ् + विभक्तिकार्यम्।

**भागुरायण**—कुमार, समय नष्ट करना व्यर्थ है। अब कुसुमपुर को घेरने के लिए हमारी सेनाओं को आज्ञा दी जाय।

गौडदेश की स्त्रियों के लोध्र (नामक) पुष्प के पराग की सुगन्धि से व्याप्त कपोलों को धूमिल करते हुए, भौंरों के समूह की कान्ति के समान काले घुँघराले केशों की कालिमा को विनष्ट करते हुए, सेनाओं के घोड़ों के खुर के अग्रभाग के आघात से उत्पन्न होनेवाले, हाथियों के मदजल से नष्ट मूलवाले, धूलियों के उठते हुए समूह शत्रुओं के मस्तक पर पड़ें ॥२३॥

(परिजनों के साथ मलयकेतु निकल गया)

---

क्लिश्नन्तः = विनष्ट करते हुए; बलानाम् = सेनाओं के, तुरगखुरपुटक्षोभलब्धात्मलाभाः = घोड़ों के खुर के अग्रभाग के आघात से उत्पन्न होनेवाले, गजमदसलिलच्छिन्नमूलाः = हाथियों के मदजल से नष्टमूलवाले, पांशुस्तम्बाः = धूलियों के उठते हुए समूह, शत्रूणाम् = शत्रुओं के, उत्तमाङ्गे = मस्तक पर, पतन्तु = पड़ें ॥२३॥

**टीका—गौडीनामिति।** गौडीनाम् = गौडरमणीनाम्, लोध्रधूलीपरिमलबहुलान्—लोध्राणाम् = लोध्रपुष्पाणाम् याः धूल्यः = परागाः तेषां परिमलेन = आमोदेन बहुलान् = व्याप्तान्, कपोलान् = गण्डप्रदेशान्, धूमयन्तः = मलिनयन्तः; भ्रमरकुलरुचः—भ्रमराणाम् = मधुपानाम् कुलस्य = समूहस्य रुक् = कान्तिः कृष्णिमा इत्यर्थः इव रुक् यस्य तादृशस्य, कुञ्चितस्य, कुटिलस्य, अलकस्य = केशपाशस्य, कृष्णिमानम् = कृष्णकान्तिम्, क्लिश्नन्तः = अपनयन्तः; बलानाम् = सैन्यानाम्, तुरग-खुरपुट-क्षोभ-लब्धात्मलाभाः—तुरगानाम् = अश्वानाम् खुरपुटैः = शफैः ('शफं क्लीवे खुरः पुमानित्यमरः) शफाग्रैः इत्यर्थः, यः क्षोभः = आघातः तेन लब्धः = प्राप्तः आत्मलाभः = स्वरूपप्राप्तिः धूलिस्वरूपताप्राप्तिरित्यर्थः यैः तादृशाः, उत्पन्नाः इत्यर्थः; गजमदसलिलच्छिन्नमूलाः—गजाः = हस्तिनः तेषां मदसलिलैः = मदजलैः छिन्नानि = विनष्टानि त्यक्तभूसंयोगानि इत्यर्थः मूलानि = निम्नभागाः येषां तादृशाः; पांशुस्तम्बाः = धूलि-प्रकाण्डाः, शत्रूणाम् = अरीणाम्, उत्तमाङ्गे = मस्तके ('उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः), जातावेकवचनम्, पतन्तु = अवरोहन्तु ॥२३॥

**टिप्पणी—कृतं कालहरणेन**—समय नष्ट करना व्यर्थ है। भागुरायण इसलिये शीघ्रता कर रहा है कि अब पुनः कदाचित् ऐसा स्वर्णिम अवसर हाथ न लगे। इस समय मलयकेतु अपने वास्तविक सहायकों से विहीन हो चुका है। अतः इसे आसानी से पकड़ा जा सकता है।

**गौडीनां लोध्रधूलीपरिमल०**—प्राचीन काल में स्त्रियाँ अपने मुख पर लोध्र पुष्प के पराग को सौन्दर्यवृद्धि के लिए लगाया करती थीं।

**धूमयन्तः**—धूम + मतुप् + णिच् + शतृ + विभक्तिकार्यम्।

**कृष्णिमानम्**—कृष्ण + इमनिच् + विभक्तिकार्यम्।

इस श्लोक में स्रग्धरा वृत्त है। लक्षण—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥२३॥

राक्ष०—( सावेगम् ) हा धिक्कष्टम् । तेऽपि घातिताश्चित्रवर्मादयस्तपस्विनः । तत्कथं सुहृद्विनाशाय राक्षसश्चेष्टते न रिपुविनाशाय । तत्किमिदानीं मन्दभाग्यः करवाणि ।

किं गच्छामि तपोवनं न तपसा शाम्येत्सवैरं मनः
किं भर्तृ्ननुयामि जीवति रिपौ स्त्रीणामियं योग्यता ।
किं वा खड्गसखः पताम्यरिबले नैतच्च युक्तं भवेच्-
चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात्कृतघ्नं न चेत् ॥ २४ ॥

( इति निष्क्रान्ताः सर्वे )

इति कूटलेखो नाम पञ्चमोऽङ्कः ।

---

**किं गच्छामीति—**

**अन्वयः**—किम् , तपोवनम् , गच्छामि, तपसा, सवैरम् , मनः, न, शाम्येत; रिपौ, जीवति, किम् , भर्तृ्न् , अनुयामि, इयम् , स्त्रीणाम् , योग्यता; वा, खड्गसखः, (सन्), अरिबले, पतामि, किम् , एतत् , च, न, युक्तम् ; चन्दनदासमोक्षरभसम् , चेतः, रुन्ध्यात् ; चेत् , न, ( रुन्ध्यात् ), कृतघ्नम् , भवेत् ॥२४॥

**शब्दार्थः**—किम् = क्या, तपोवनम् = तपोवन को, गच्छामि = चला जाऊँ ?, तपसा = तपस्या से, सवैरम् = वैरयुक्त, प्रतिशोध की भावना से भरा हुआ, मनः = मन, न = नहीं, शाम्यते = शान्त होगा; रिपौ = शत्रु के, जीवति = जीवित रहने पर, जीते जी, किम् = क्या, भर्तृ्न् = स्वामियों का, अनुयामि = अनुसरण करूँ ? ( अर्थात् मर कर नन्द के पास चला जाऊँ ? ), इयम् = यह, स्त्रीणाम् = स्त्रियों की, योग्यता = योग्यता है, पद्धति है; वा = अथवा, खड्गसखः = तलवार ही है सहायक जिसकी ऐसा, (सन् = होता हुआ), अरिबले = शत्रु की सेना पर, पतामि = टूट पड़ूँ, किम् = क्या ? एतत् = यह, च = भी, न = नहीं, युक्तम् = ठीक है; चन्दनदासमोक्षरभसम् = चन्दन-दास को छुड़ाने के लिए चञ्चल, चेतः = चित्त, रुन्ध्यात् = रोक रहा है, चेत् = यदि, न = नहीं, (रुन्ध्यात् = रोके), कृतघ्नम् = कृतघ्न, भवेत् = होगा ॥२४॥

**टीका**—किं गच्छामीति । भृशं खिन्नहृदयो विचारयति राक्षसः—किमि । किं तपोवनम् = किं तपोऽरण्यम् , तपस्यार्थं वनमित्यर्थः, गच्छामि = व्रजामि ? पुनः समाधत्ते—तपसा = तपस्यया, सवैरम् = सामर्षम् , मनः = चेतः, न शाम्येत = न शान्तिं लभेत । तर्हि रिपौ = शत्रौ, चन्द्रगुप्ते इत्यर्थः, जीवति = जीवनं धारयति, किमिति प्रश्ने, भर्तृ्न् = स्वामिनः नन्दादीन् , अनुयामि = अनुसरामि, प्राणान् परित्य-जामीत्यर्थः ? इयम् = एषा, स्त्रीणाम् = अबलानाम् , योग्यता = प्रतिविधानम् , पद्धति-रित्यर्थः । ताः एव भर्तरि हते वियोगे प्राणान् परित्यजन्तीतिभावः । वा = अथवा, खड्गसखः = खड्गद्वितीयः सन् , खड्गं गृहीत्वेत्यर्थः, अरिबले = शत्रुसैन्ये, पतामि = आक्रमणं करोमि ? वीरोचितं मरणं समाश्रये ? इति वितर्कः; एतत् = इदं कर्म, शत्रु-बलमाक्रम्य वीरोचितं मरणमिति भावः, च = अपि, न युक्तम् = न समीचीनम् ; कुतः ?

**राक्षस**—( उद्विग्नता के साथ ) हाय धिक्कार है, कष्ट है। वे बेचारे चित्रवर्मा आदि भी मार डाले गये। तो क्या राक्षस (अपने) मित्रों के विनाश के लिए प्रयत्न कर रहा है, शत्रुओं के नाश के लिए नहीं ? तो अभागा (मैं) अब क्या करूँ ?

क्या तपोवन को चला जाऊँ ? तपस्या से प्रतिशोध की भावना से भरा हुआ मन शान्त नहीं होगा। (तो) शत्रु के जीते जी क्या स्वामियों का (नन्दादि का) अनुसरण करूँ ? (अर्थात् प्राण त्याग कर नन्द के पास चला जाऊँ ?) यह स्त्रियों की योग्यता (पद्धति) है। अथवा हाथ में तलवार लेकर शत्रु की सेना पर टूट पड़ूँ, क्या ? यह भी नहीं ठीक है; (क्योंकि) चन्दनदास को छुड़ाने के लिए चञ्चल (विह्वल) मेरा चित्त रोक रहा है; यदि न रोके (तो) कृतघ्न होगा। (अर्थात् यदि मेरा चित्त मुझे युद्ध करके मर जाने से न रोके तो वह कृतघ्न होगा) ॥२४॥

(इस प्रकार सभी निकल जाते हैं।)

॥ कूटलेख नामक पञ्चम अङ्क समाप्त ॥

---

समाधत्ते—चन्दनदासेतिचन्दनदासस्य=प्राणप्रियस्य सुहृदः चन्दनदासस्येत्यर्थः, मोक्षाय=बन्धनान्मोचनाय रभसः=त्वरा यस्य तादृशम्, चेतः=मदीयं मनः, रुन्ध्यात्=मां निवारयतीत्यर्थः; चेत्=यदि, न=न रुन्ध्यात्, अरिबलपतनान्मां न निवारयेदित्यर्थः, तदा कृतघ्नम्=अकृतज्ञम्, भवेत्=स्यात्। शत्रौ आक्रमणपक्षे चन्दनदासविषये कृतघ्नतादोषः आपतितः स्यादिति भावः। अकार्यशतमपिकृत्वा सम्प्रति चन्दनदासस्य बन्धनान्मोक्षणमेवावश्यकमिति भावः ॥२४॥

॥ इति कूटलेखो नाम पञ्चमोऽङ्कः ॥

**टिप्पणी—सुहृद्विनाशाय······न रिपुविनाशाय**—राक्षस का अभिप्राय यह है कि अब तक किये गये मेरे कार्यों का परिणाम शत्रुनाश के स्थान पर अपने ही व्यक्तियों का विनाश हुआ है।

**भर्तॄननुयामि**—यहाँ राक्षस सोचता है कि क्या प्राणहत्या करके मर जाऊँ ?

**कृतघ्नं न चेत्**—राक्षस सोचता है कि चन्दनदास कारागार में पड़ा हुआ है। वह सोचता होगा कि एक न एक दिन राक्षस हमें छुड़ाएगा ही। किन्तु यदि मैं लड़ कर मर जाता हूँ तो चन्दनदास के प्रति मेरी यह कृतघ्नता होगी। अतः प्राण न त्याग कर जिस किसी प्रकार से उसे छुड़ाना ही हमारा कर्तव्य है। यही कारण है कि शत्रु पर अकेले आक्रमण करने से मेरा चित्त मुझे रोक रहा है।

इस श्लोक में दीपक और काव्यलिंग अलंकार तथा शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

**सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्** ॥२४॥

॥ पंचम अङ्क समाप्त ॥

# षष्ठोऽङ्कः

( ततः प्रविशत्यलंकृतः सहर्षः सिद्धार्थकः )

**सिद्धा०**—

जयति जलदनीलः केशवः केशिघाती
जयति च जनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।
जयति जयनकार्यं यावत्कृत्वा च सर्वं
प्रतिहतपरपक्षा आर्यचाणक्यनीतिः ॥ १ ॥

जअदि जलदणीलो केसवो केसिघादी
जअदि अ जणदिट्ठीचन्दा चन्दउत्तो ।
जअदि जअणकज्जं जाव काऊण सव्वं
पडिहदपरपक्खा अज्जचाणक्कणीदी ॥ १ ॥

तावच्चिरस्य कालस्य प्रियवयस्यं समिद्धार्थकं पश्यामि । ( परिक्रम्यावलोक्य च ) एप मे प्रियवयस्यः समिद्धार्थक इत एवागच्छति । यावदेनमुपसर्पामि । ( दाव च्चिरस्स कालस्स पिअवअस्सं समिद्धत्थअं पेक्खामि । एसो मे पिअवअस्सओ इदो एव्व आअच्छदि । जाव णं उपसप्पामि । )

( ततः प्रविशति समिद्धार्थकः )

**समिद्धा०**—

सन्तापे तारेशानां गेहोत्सवे सुखायमानानाम् ।
हृदयस्थितानां विभवा विरहे मित्राणां दूनयन्ति ॥ २ ॥

---

**जयतीति**—

**अन्वयः**—जलदनीलः, केशिघाती, केशवः, जयति; जनदृष्टिचन्द्रमाः, चन्द्रगुप्तः, जयति; जयनकार्यम्, च, यावत्, सर्वम्, कृत्वा, प्रतिहतपरपक्षा, आर्यचाणक्यनीतिः, जयति ॥१॥

**शब्दार्थः**—जलदनीलः = जलभरे बादलों के समान श्याम, केशिघाती = केशी-नामक राक्षस को मारनेवाले, केशवः = विष्णु, जयति = सर्वश्रेष्ठ हैं; जनदृष्टिचन्द्रमाः = मनुष्यों की दृष्टि के लिए चन्द्रमा के समान, चन्द्रगुप्तः = मौर्य चन्द्रगुप्त, जयति = सर्वश्रेष्ठ है, जयनकार्यम् = विजयरूप कार्य को, यावत् = सर्वात्मना, सर्वम् = पूर्ण रूप से, कृत्वा = करके, प्रतिहतपरपक्षा = शत्रु के पक्ष को नष्ट कर देनेवाली, आर्यचाणक्य-नीतिः = आर्य चाणक्य की नीति, जयति = सर्वोत्कृष्ट है ॥१॥

**टीका**—**जयतीति** । जलदनीलः—जलम् = सलिलम् ददातीति जलदः = सजलो मेघः तद्वत् नीलः = श्यामः, केशिघाती—केशिनम् = अश्वरूपधारिणम् असुरविशेषम् हन्तुम् = विनाशयितुम् शीलमस्येति केशिघाती = केशिविनाशकः,

## षष्ठोऽङ्कः

(तदनन्तर आभूषणों से सजा हुआ प्रसन्नचित्त सिद्धार्थक प्रवेश करता है)

**सिद्धार्थक**—जलभरे बादलों के समान श्यामकेशी नामक राक्षस को मारनेवाले विष्णु सर्वश्रेष्ठ हैं। मनुष्यों की दृष्टि के लिए चन्द्रमा के समान (आनन्द-दायक) चन्द्रगुप्त सर्वश्रेष्ठ हैं। विजयरूप कार्य को सर्वात्मना पूर्णरूप से करके शत्रु के पक्ष को नष्ट कर देनेवाली आर्य चाणक्य की नीति सर्वोत्कृष्ट है ॥१॥

तो बहुत दिनों के बाद (अपने) प्रियमित्र समिद्धार्थक को देखूँगा। (घूमकर और देखकर) यह मेरा प्रियमित्र समिद्धार्थक इधर ही आ रहा है। तो (मैं) इसके पास चलता हूँ ॥

(इसके बाद समिद्धार्थक प्रवेश करता है)

**समिद्धार्थक**—दुःख में चन्द्रमा के समान सन्ताप का हरण करनेवाले, गृह के आमोद-प्रमोद में सुख का अनुभव करनेवाले, हृदय में विद्यमान (अर्थात् अभिन्नहृदय) मित्रों के विरह में ऐश्वर्य (व्यक्ति को) पीडित करते हैं ॥२॥

---

केशवः = कृष्णरूपधारी विष्णुः, जयति = सर्वोत्कर्षेण वर्तते। जनदृष्टिचन्द्रमाः—जनस्य = लोकस्य दृष्टेः = दृष्टिसम्बन्धे चन्द्रमाः = चन्द्रः, चन्द्र इव लोकलोचनानन्ददायीत्यर्थः, चन्द्रगुप्तः = मौर्यः, जयति = सर्वोत्कर्षेणवर्तते। जयनकार्यम्—जयनस्य = विजयस्य वा जयनमेव कार्यम् = कृत्यम्, यावत् = समग्रम्, सर्वम् = सर्वात्मनेत्यर्थः, कृत्वा = विधाय, प्रतिहतपरपक्षा—प्रतिहतः = विनाशितः परपक्षः = शत्रुपक्षः यया तादृशी, आर्यचाणक्यनीतिः—आर्यचाणक्यस्य = पूज्यस्य विष्णुगुप्तस्य नीतिः = नयः, जयति = सर्वोत्कृष्टासतीवर्तते ॥१॥

**टिप्पणी—अलंकृतः सिद्धार्थकः**—सिद्धार्थक चाणक्य का गुप्तचर है। इसकी चर्चा प्रथम अङ्क में आ चुकी है। यह इस समय चन्द्रगुप्त के द्वारा पुरस्कार के रूप में दिये गये आभूषणों को धारण किये हुए है।

इस श्लोक में उपमा रूपक तथा विभावना अलङ्कार की संसृष्टि तथा मालिनी छन्द है। छन्द का लक्षण—

ननमयययुतेयं मालिनी भोगिलोकैः ॥१॥

**सन्तापे इति**—

**अन्वयः**—सन्तापे, तारेशानाम्, गेहोत्सवे, सुखायमानानाम्, हृदयस्थितानाम्, मित्राणाम्, विरहे, विभवाः, दूनयन्ति ॥२॥

**शब्दार्थः**—सन्तापे = दुःख में, तारेशानाम् = चन्द्रमा के समान सन्ताप का हरण करनेवाले, गेहोत्सवे = गृह के आमोद-प्रमोद में, सुखायमानानाम् = सुख का अनुभव करनेवाले, हृदयस्थितानाम् = हृदय में विद्यमान (अर्थात् अभिन्नहृदय), मित्राणाम् = मित्रों के, विरहे = विरह में, विभवाः = ऐश्वर्य, दूनयन्ति = पीडित करते हैं ॥२॥

**टीका—सन्तापे इति**। सन्तापे = दुःखे, तारेशानाम्—ताराणाम् = नक्षत्राणाम्

संदावे तारेसाणं गेहूसवे सुहाअन्ताणं।
हिअअट्ठिदाणं विहवा विरहे मित्ताणं दूणन्दि ॥ २ ॥

श्रुतं मया मलयकेतुकटकात्प्रियवयस्यः सिद्धार्थक आगत इति । तद्यावदेनमन्वेषयामि । ( इति परिक्रामति । विलोक्य ) एष सिद्धार्थकः । ( सुदं मए मलअकेदुकडआदो पिअवअस्सओ सिद्धत्थओ आअदोत्ति । ता जाव णं अण्णेसामि । एसो सिद्धत्थओ । )

सिद्धा०—( उपसृत्य ) कथं समिद्धार्थकः ? अपि सुखं प्रियवयस्यस्य ? (कहं समिद्धत्थओ । अवि सुहं पिअवअस्सस्स । )

( इत्यन्योन्यमालिङ्गितः )

समिद्धा०—वयस्य कुतो मे सुखं येन त्वं चिरप्रवासप्रत्यागतोप्यद्य न मे गेहमागच्छसि । ( वअस्स कुदो मे सुहं जेण तुमं चिरप्पवासपच्चागदो वि अज्ज ण मे गेहं आअच्छसि । )

सिद्धा०—प्रसीदतु वयस्यः । दृष्टमात्र एव आर्यचाणक्येनाज्ञप्तोऽस्मि यथा सिद्धार्थक गच्छ इमं प्रियोदन्तं देवस्य चन्द्रश्रियो निवेदयेति । तत एतस्मै निवेद्यैवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तवैव गेहं चलितोऽस्मि । ( पसीददु वअस्सो । दिठ्ठमेत्तो एव्व अज्जचाणक्केण आणत्तोह्मि जह सिद्धत्थअ गच्छ एदं पिओदन्तं देवस्स चन्दसिरिणो णिवेदेहित्ति । तदो एदस्स णिवेदिअ एव्वं अणुभूदपत्थिवप्पसादो अहं पिअवअस्सं पेक्खिदुं तुह एव्व गेहं चलिदोह्मि ।

समिद्धा०—वयस्य, यदि मे श्रोतव्यं भवति ततः कथय किं तत्प्रियं यत्प्रियदर्शनाय चन्द्रश्रिये निवेदितम् । ( वअस्स जदि मे सुणिदव्वं भोदि तदो कहेहि किं तं पिअं जं पिअदंसणस्स चन्दसिरिणो णिवेदिदं । )

सिद्धा०—वयस्य, किं तवाप्यश्रोतव्यमस्ति तन्निशामय । अस्ति तावच्चाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निष्कास्य राक्षसं हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः । ततोऽसमीक्ष्यकारी एष दुराचार इत्युज्झित्वा मलयकेतुकटकभूमिं कुशलतायै भयविलोलशेषसैनिकपरिवारेषु स्वकं स्वकं विषयं सभयं प्रस्थितेषु पार्थिवेषु निर्विण्णहृदयेषु सकलसामन्तेषु भद्रभटपुरुषदत्तडिङ्गरातबलगुप्तराजसेनभागुरायणरोहिताक्षविजयवर्मप्रमुखैः संयम्य गृहीतो मलयकेतुः । ( वअस्स किं तुहवि असुणिदव्वं अत्थि ता णिसामेहि । अत्थि

---

ईशाः = स्वामिनः तेषाम्, चन्द्रवत्सन्तापापहारिणामित्यर्थः, गेहोत्सवे—गेहे = गृहे यः उत्सवः = आमोदप्रमोदः तस्मिन्, सुखायमानानाम् = सुखमनुभवताम्, हृदयस्थितानाम् = हृदये वर्तमानानाम्, अभिन्नानामित्यर्थः, मित्राणाम् = सुहृदाम्, विरहे = वियोगे, विभवाः = सम्पत्तयः, दूनयन्ति = सन्तापयन्ति जनमितिशेषः । सन्मित्रैः सह सम्पत्तीनामुपभोग एव तत्सार्थकत्वं द्योतयतीति भावः । अनेन समिद्धार्थकस्यापि सम्पत्तिप्राप्तिः सूचिता ॥ २ ॥

**टिप्पणी—समिद्धार्थक**—इसका नाम सार्थक है । यह खूब सम्पन्न है । आनन्दोपभोग इसके जीवन का प्रधान कार्य है । सम्भवतः इसे भी चन्द्रगुप्त के द्वारा पुरस्कार मिलते रहे हैं । यह प्रथम बार सामने आ रहा है ।

मैंने सुना है कि मलयकेतु के शिविर से प्रियमित्र सिद्धार्थक आ गया है। तो इसको खोजता हूँ। (ऐसा कहकर घूमता है। देखकर) यह सिद्धार्थक है।

**सिद्धार्थक**—(पास में जाकर) क्या समिद्धार्थक है? प्रियमित्र, आनन्द तो है न?

(ऐसा कहकर दोनों आपस में आलिङ्गन करते हैं)

**समिद्धार्थक**—मित्र, मुझे आनन्द कहाँ, क्योंकि तुम बहुत दिनों के बाद बाहर से लौटकर अब भी हमारे घर नहीं आ रहे हो॥

**सिद्धार्थक**—मित्र (आप) प्रसन्न हों। देखते ही आर्य चाणक्य ने (मुझे) आज्ञा दी थी कि—'सिद्धार्थक, जाओ, इस प्रिय समाचार को महाराज चन्द्रगुप्त से निवेदन करो।' तो इनसे (चन्द्रगुप्त से समाचार को) निवेदन करके राजा की कृपा का अनुभव करके (अर्थात् प्रसन्न हुए राजा से आभूषण आदि पुरस्कार के रूप में प्राप्त करके) मैं प्रियमित्र को देखने के लिए आप के ही घर जा रहा हूँ।

**समिद्धार्थक**—मित्र, यदि मुझे सुनने के योग्य हो तो बतलाओ वह क्या प्रिय (समाचार) है जो प्रियदर्शन चन्द्रगुप्त से निवेदन किया गया है?

**सिद्धार्थक**—मित्र, क्या तुम्हें भी सुनने योग्य नहीं है? (अर्थात् तुम तो सब कुछ सुनने के अधिकारी हो) तो सुनो। ऐसा है (कि) चाणक्य की नीति से मोहित बुद्धिवाले दुष्ट मलयकेतु के द्वारा राक्षस को निकाल कर चित्रवर्मा आदि पाँच प्रधान

---

**दूनयन्ति**— √दू + क्त कर्तरि दूनः। दूनं कुर्वन्ति इति दून + णिच् (नामधातु) + लट् अन्ति।

इस श्लोक में दीपक तथा काव्यलिङ्ग अलङ्कार एवम् आर्या छन्द है। छन्द का लक्षण—

यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदशः साऽऽर्या॥२॥

**शब्दार्थः**—प्रियोदन्तम् = प्रिय समाचार को। अनुभूतपार्थिवप्रसादः = अनुभव किया गया है राजा का अनुग्रह जिसके द्वारा, राजा की कृपा का अनुभव करके, प्रेक्षितुम् = देखने के लिए। श्रोतव्यम् = सुनने योग्य॥

**टीका**—प्रियोदन्तम्—प्रियम् = आनन्ददायकम् तच्च तत् उदन्तम् = वृत्तान्तम्। अनुभूतपार्थिवप्रसादः—अनुभूतः = अनुभवविषयीकृतः पार्थिवस्य = राज्ञः चन्द्रगुप्तस्येत्यर्थः प्रसादः = कृपा आभूषणादिप्राप्तिरित्यर्थः येन तादृशः, प्रेक्षितुम् = अवलोकयितुम्। श्रोतव्यम् = श्रवणार्हम्॥

**शब्दार्थः**—निशामय = सुनो। चाणक्यनीतिमोहितमतिना = चाणक्य की नीति से मोहित बुद्धिवाले, मलयकेतुहतकेन = दुष्टमलयकेतु के द्वारा। असमीक्ष्यकारी = बिना विचारे कार्य करनेवाला। भयविलोलशेषसैनिकपरिवारेषु = भय के कारण विह्वल अवशिष्ट सैनिकों से घिरे हुए, विषयम् = देश को, निर्विण्णहृदयेषु = खिन्न हृदयवाले। संयम्य = घेरकर॥

दाव चाणक्कणीदिमोहिदमदिणा मलअकेदुहदएण णिक्कासिअ रक्खसं हदा चित्तवम्मप्पमुहाप्पहाणा पञ्च पत्थिवा। तदो असमिक्खकारी एसो दुराआरोत्ति उज्झिअ मलयकेदुकडअभूमिं कुसलदाए भअविलोलसेससैणिकपरिवारेसु सकं सकं विसअं सभअं पत्थिदेसु पात्थिवेसु णिव्विण्णहिअएसु सअलसामन्तेसु भद्दभट्टपुरिसदत्तडिङ्गरादबलउत्तराअसेणभागुराअणरोहिदक्खविजअवम्मप्पमुहेहिंसंजमिअ गिहीदो मलयकेदु।)

**समिद्धा०**—वयस्य, भद्रभटप्रमुखाः किल देवाच्चन्द्रगुप्तादपरक्ता मलयकेतुं समाश्रिता इति लोके मन्यते। तत्किं निमित्तं कुकविकृतनाटकस्येवान्यन्मुखेऽन्यन्निर्वहणे। (वअस्स भद्दभटप्पमुहा किल देवस्स चन्दउत्तस्स अवरत्ता मलअकेदुं समस्सिदा त्ति लोए मन्तीअदि। ता किंणिमित्तं कुकविकिदणाडअस्स विअ अण्णं मुहे अण्णं णिव्वहणे।)

**सिद्धा०**—वयस्य दैवगत्या इवाश्रुतगत्यै नम आर्यचाणक्यनीत्यै। (वअस्स देवगदीए विअ अनुणिदगदीए णमो अज्जचाणक्कणीदीए।)

**समिद्धा०**—ततस्ततः (तदो तदो ?)

**सिद्धा०**—ततः प्रभूतसारसाधनसमेतेनेतो निष्क्रम्यार्यचाणक्येन प्रतिपन्नमराजलोकमशेषं म्लेच्छबलम्। (तदो पभूदसारसाहणसमेदेण इदो णिक्कमिअ अज्जचाणक्केण पडिवण्णं अराअलोअं असेसं मिलेच्छबलं।)

**समिद्धा०**—वयस्य, कुत्र तत् ? (वअस्स कहिं तं ?)

---

**टीका**—निशामय = शृणु। चाणक्यनीतिमोहितमतिना—चाणक्यस्य = कौटिल्यस्य नीतिः = नयः तया मोहिता = विवेकशून्यीकृता वशीकृतेति यावत् मतिः = बुद्धिः यस्य तादृशेन, मलयकेतुहतकेन = दुष्टेन मलयकेतुना, हतकशब्दो दुष्टार्थाभिधायी। असमीक्ष्यकारी—न समीक्ष्य = न सम्यक् विचार्य कर्तुम् = व्यवहर्तुम् शीलम् = स्वभावः अस्य इति तादृशः, अविचारशीलः इत्यर्थः। भयविलोलशेषसैनिकपरिवारेषु—भयेन = भीत्या विलोलाः = चञ्चलाः शेषाः = अवशिष्टाः ये सैनिकाः = सेनासदस्याः ते एव परिवाराः = परिजनाः, परिवृत्य निवसनशीलाः इत्यर्थः येषां तेषु; विषयम् = देशम् ('देशविषयौ तूपवर्तनम्' इत्यमरः), निर्विण्णहृदयेषु—निर्विण्णानि = खिन्नानि हृदयानि = मनांसि ('हृदयं स्वान्तं हृन्मानसं मनः' इत्यमरः) येषां तादृशेषु। संयम्य = सर्वतः परिवृत्य॥

**टिप्पणी—असमीक्ष्यकारी**—नञ् + सम् + √ईक्ष् + ल्यप् = समीक्ष्य, समीक्ष्य + √कृ + णिनिकर्तरि ताच्छील्ये + विभक्त्यादिकार्यम्।

**प्रस्थितेषु पार्थिवेषु निर्विण्णहृदयेषु सकलसामन्तेषु**—पार्थिव और सामन्त में अन्तर है। पार्थिव अपने देश के स्वतन्त्र शासक थे। मलयकेतु के साथ उनकी सन्धि थी। उनका आपसी व्यवहार मित्रवत् था। सामन्त मलयकेतु के द्वारा जीते गये वे छोटे-छोटे राजा थे जो उसको कर दिया करते थे। राजा स्वतन्त्र थे अतः चले गये, किन्तु सामन्तों को वहीं पर रहना पड़ा।

**शब्दार्थः**—अपरक्ताः = विरक्त, खिन्न; मन्यते = कहा जाता है। मुखे = मुख-

राजा मार डाले गये। तदनन्तर यह दुराचारी (मलयकेतु) बिना विचारे कार्य करने-वाला है—ऐसा सोचकर मलयकेतु के शिविर-प्रदेश को छोड़कर (अपनी) कुशलता के लिए भय के कारण विह्वल अवशिष्ट सैनिकों से घिरे हुए राजाओं के भयपूर्वक अपने-अपने देश के लिए प्रस्थान कर देने पर, सभी सामन्तों के खिन्नहृदय हो जाने पर भद्रभट-पुरुषदत्त-डिङ्गरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्मा आदि के द्वारा घेरकर मलयकेतु पकड़ लिया गया ॥

**समिद्धार्थक**—मित्र, महाराज चन्द्रगुप्त से विरक्त भद्रभट आदि ने मलय-केतु का आश्रय लिया था—ऐसा संसार में कहा जाता है। तो किसलिये अयोग्य कवि के द्वारा रचित नाटक के समान मुखसन्धि में (अर्थात् आरम्भ में) कुछ और तथा निर्वहण सन्धि में (अर्थात् अन्त में) कुछ और (हुआ) ?

**सिद्धार्थक**—मित्र, दैव की गति के समान अज्ञात गतिवाली आर्य चाणक्य की नीति को नमस्कार है ( अर्थात् चाणक्य की नीति के महत्त्व को समझना अत्यन्त कठिन है। यह सब उसी नीति का खिलवाड़ था)।

**समिद्धार्थक**—उसके बाद, उसके बाद (क्या हुआ) ?

**सिद्धार्थक**—उसके बाद विशाल प्रमुख सेना के साथ यहाँ (नगर) से निकल कर आर्य चाणक्य के द्वारा राजाओं से विहीन सम्पूर्ण म्लेच्छ-सेना वश में कर ली गयी ॥

**समिद्धार्थक**—मित्र, वह कहाँ (हुआ) ?

---

सन्धि में, निर्वहणे = निर्वहणसन्धि में। प्रभूतसारसाधनसमेतेन = विशाल प्रमुख सेना के साथ, प्रतिपन्नम् = वश में कर लिया गया, अशेषम् = सम्पूर्ण ॥

**टीका**—अपरक्ताः = विरक्ताः, खिन्नाः इति यावत्। मन्त्र्यते = कथ्यते, वस्तुतस्तु परस्परं कर्णे कथ्यते इत्यर्थः। मुखे = मुखे = मुखसन्धौ, प्रारम्भे इति यावत्; निर्वहणे= निर्वहणसन्धौ, उपसंहारे इत्यर्थः। प्रभूतसारसाधनसमेतेन—प्रभूतम् = अत्यधिकम् यत् सारसाधनम् = उत्कृष्टसैन्यम् तेन समेतेन = सहितेन; प्रतिपन्नम् = स्वीकृतम्, वशीकृत-मित्यर्थः; अशेषम् = सम्पूर्णम् ॥

**टिप्पणी—अन्यन्मुखेऽन्यान्निर्वहणे**—नाटक के आदि तथा अन्त में एकरूपता होनी चाहिए। इसके अभाव में नाटक दोषयुक्त माना जाता है और उसका कर्ता कवि कुकवि कहा जाता है। यहाँ भी कुछ ऐसा ही हुआ है। भद्रभट आदि चन्द्रगुप्त से विरक्त होकर मलयकेतु से जा मिले थे और अब उन्होंने मलयकेतु को ही पकड़ लिया। ये दोनों बातें परस्पर विरोधी हैं।

**सारसाधनसमेतेन**—साध्यते अनेन इति √ साध + ल्युट् करणे साधनम् = सैन्यम्। सारम् = श्रेष्ठम्।

**प्रतिपन्नम्**—प्रति + √ पद् + क्त कर्मणि + विभक्तिकार्यम् ॥

सिद्धा०—यत्रैते ( जहिं एदे )—

अतिशयगुरुकेण दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति ।
कशाप्रहारभयेन जातकम्पोत्तरङ्गा
गृहीतजयनशब्दाः संपतन्ति तुरङ्गाः ॥ ३ ॥

अदिसअगुरुएण दाणदप्पेण दन्ती
सजलजलदलीलामुव्वहन्तो णदन्ति ।
कसपहरभएण जाअकम्पोत्तरङ्गा
गिहिदज अणसद्दा संपअन्ते तुरङ्गा ॥ ३ ॥

**समिद्धा०**—वयस्य, एतत्तावत्तिष्ठतु । तथा सर्वलोकप्रत्यक्षमुज्झिताधिकारः स्थित्वा आर्यचाणक्यः किं पुनरपि तदेव मन्त्रिपदमारूढः । ( वअस्स एदं दाव चिठ्ठदु । तहा सव्वलोअपच्चक्खं उज्झिआहिआरो चिठ्ठिअ अज्जचाणक्को किं पुणो वि तं एव्व मन्तिपदं आरूढो ? )

**सिद्धा०**—अतिमुग्धोऽसीदानीं त्वं यदमात्यराक्षसेनाप्यनवाहितपूर्वमार्यचाणक्यचरितमवगाहितुमिच्छसि । ( अदिमुद्धोसि दाणी तुमं जो अमच्चरक्खसेण वि अणवगाहिदपुव्वं अज्जचाणक्कचरिदं अवगाहिदुं इच्छसि । )

**समिद्धा०**—वयस्य, अमात्यराक्षसः सांप्रतं कुत्र ? ( वअस्स अमच्चरक्खसो संपदं कहिं ? )

**सिद्धा०**—तस्मिन्भयविलोले वर्धमाने मलयकेतुकटकान्निष्क्रम्योदुम्बरनामधेयेन चरेणानुसन्धीयमान इदं पाटलिपुत्रमागत इत्यार्यचाणक्याय निवेदितम् । ( तस्सिं भअविलोले

---

**अतिशयगुरुकेणेति**—

**अन्वयः**—(यत्र, एते), अतिशयगुरुकेण, दानदर्पेण, सजलजलदलीलाम्, उद्वहन्तः, दन्तिनः, नदन्ति; कशाप्रहारभयेन, जातकम्पोत्तरङ्गाः, गृहीतजयनशब्दाः, तुरङ्गाः, सम्पतन्ति ॥३॥

**शब्दार्थः**—(यत्र = जहाँ पर, एते = ये), अतिशयगुरुकेण = अत्यन्त प्रबल, दानदर्पेण = मदजल से उत्पन्न गर्व के कारण, सजलजलदलीलाम् = जल से भरे हुए बादलों की लीला को, उद्वहन्तः = धारण करनेवाले, दन्तिनः = हाथी, नदन्ति = शब्द कर रहे हैं, चिग्घाड़ रहे हैं; कशाप्रहारभयेन = चाबुक की मार के डर से, जातकम्पोत्तरङ्गाः = अत्यन्त काँपते हुए अत एव चञ्चल, गृहीतजयनशब्दाः = जय शब्द को ग्रहण करनेवाले (अर्थात् विजयी), तुरङ्गाः = घोड़े, सम्पतन्ति = (आक्रमणार्थ) कूद रहे हैं ॥३॥

**टीका**—**अतिशयगुरुकेणेति** । यत्रैते इति पदद्वयं गद्यभागादानेयम् । अतिशयगुरुकेण = अतिमहता, दानदर्पेण—दानस्य = मदजलस्य दर्पेण = अभिमानेनहेतुना, **सजलजलदलीलाम्—जलेन = सलिलेन सहितः सजलः = जलयुक्तः** यः जलदः = जलवर्षी मेघः तस्य लीलाम् = क्रीडाम् ; उद्वहन्तः = धारयन्तः; दन्तिनः = हस्तिनः; नदन्ति =

सिद्धार्थक—जहाँ ये—

अत्यन्त प्रबल मदजल से उत्पन्न गर्व के कारण जल से भरे हुए बादलों की लीला को धारण करनेवाले हाथी चिग्घाड़ रहे हैं। (और) चाबुक की मार के डर से अत्यन्त काँपते हुए अतएव चञ्चल, जय शब्द को ग्रहण करनेवाले (अर्थात् विजयी) घोड़े (आक्रमण के लिए) कूद रहे हैं ॥३॥

समिद्धार्थक—मित्र, अच्छा यह रहने दो। (पहले तो यह बतलाओ कि) सारे संसार के सामने उस तरह से (मन्त्रि-पदरूप) अधिकार का परित्याग कर देनेवाले आर्य चाणक्य क्या फिर भी उसी मन्त्रिपद को ग्रहण कर लिये ?

सिद्धार्थक—तुम इस समय अत्यन्त भोले-भाले (प्रतीत हो रहे) हो जो कि अमात्य राक्षस के द्वारा भी पहले पार न पाये गये (अर्थात् न जाने गये) आर्य चाणक्य के चरित्र की थाह लगाना चाह रहे हो।

समिद्धार्थक—मित्र, अमात्य राक्षस इस समय कहाँ है ?

सिद्धार्थक—भय की उस लहर के (चारों ओर) परिव्याप्त होने पर मलयकेतु के शिविर से निकल कर उदुम्बर नामक गुप्तचर के द्वारा पीछा किया जाता हुआ अभी पाटलिपुत्र में आया है—यह बात आर्य चाणक्य से निवेदन की गयी है ॥

---

शब्दायन्ते; अत्र जलवर्षणात् नीलस्वरूपत्वाच्च दन्तिनां मेघोपमा बोध्या। कशाप्रहारभयेन—कशाः = अश्वताडिन्यः ('अश्वादेस्ताडिनीकशा' इत्यमरः) ताभिः यः प्रहारः = ताडनम् तस्माद्भयम् = भीतिः तेन; जातकम्पोत्तरङ्गाः—जातः = उत्पन्नः कम्पः = कम्पनम् येषां तादृशाः, अत्यन्तं कम्पमानाः इत्यर्थः, अत एव उत्तरङ्गाः = चञ्चलाः; गृहीतजयनशब्दाः—गृहीतः = स्वीकृतः ज्ञातो वा जयनशब्दः = जयघोषः यैस्ते तथाभूताः, विजयिनः इति भावः; तुरङ्गाः = वाजिनः, सम्पतन्ति = आक्रमणार्थं कूर्दन्ते ॥३॥

टिप्पणी—इस श्लोक में चन्द्रगुप्त की प्रबल हस्तिसेना तथा अश्वसेना के आक्रमण का वर्णन है।

इस श्लोक में उपमा तथा रूपक का सन्देहसङ्कर अलङ्कार तथा मालिनी छन्द है। छन्द का लक्षण—

ननमयययुतेयं मालिनी भोगिलोकैः ॥३॥

शब्दार्थः—उज्झिताधिकारः = अधिकार का परित्याग कर देनेवाले, अधिकार का परित्याग किये हुए, आरूढः = आसीन हुए। ग्रहण कर लिये। अतिमुग्धः = अत्यन्त भोले-भाले। अनवगाहितपूर्वम् = पहले पार न पाये गये। भयविलोले = भय की लहर के, वर्धमाने = बढ़ने पर, परिव्याप्त होने पर। चरेण = गुप्तचर के द्वारा, भेदिया के द्वारा। अनुसन्धीयमानः = पीछा किये जाते हुए ॥

टीका—उज्झिताधिकारः—उज्झितः = परित्यक्तः, अधिकारः = अमात्यपदमित्यर्थः येन तादृशः; आरूढः = अधिगतवान्। अतिमुग्धः = अतिसरलः। अनवगाहितपूर्वम्—पूर्वम् = इतः पूर्वम् अनवगाहितमित्यनवगाहितपूर्वम् = पूर्वमज्ञातम्। भयविलोले = भीतितरङ्गे, वर्धमाने = परिव्याप्ते सति। चरेण = गुप्तचरेण, चाणक्यगुप्तचरेणेत्यर्थः। अनुसन्धीयमानः = अनुस्रियमाणः ॥

वढ्ढमाणे मलअकेदुकडआदो णिक्कमिअ उदुम्भरणामहेएण चरेण अनुसन्धिज्जमाणो इमं पाडलीउत्तं आअदोत्ति अज्जचाणकस्स णिवेदिदं । )

**समिद्धा०**—वयस्य, तथा नामामात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य सांप्रतमकृतार्थः पुनरपीदं पाटलिपुत्रमागत एव । ( वअस्स तहाणाम अमच्चरक्खसो णन्दरज्जपच्चाणअणे किदव्ववसाओ णिक्कमिअ संपदं अकिदत्थो पुणोवि इमं पाडलिउत्तं आअदो । एव्व । )

**सिद्धा०**—वयस्य, तर्कयामि चन्दनदासस्नेहेनेति । ( वअस्स तक्केमि चन्दणदासमिणेहेणत्ति । )

**समिद्धा०**—वयस्य, चन्दनदासस्य मोक्षमिव प्रेक्षे । ( वअस्स चन्दणदासस्स मोक्खं विअ पेक्खामि । )

**सिद्धा०**—कुतोऽस्याधन्यस्य मोक्षः । स खलु सांप्रतमार्यचाणक्यस्याज्ञप्त्या द्वाभ्यामावाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः । ( कुदो से अधणस्स मोक्खो । सो क्खु संपदं अज्जचाणकस्स आणत्तीए दुवेहिं अह्मेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो । )

**समिद्धा०**—( सक्रोधम् ) किमार्यचाणक्यस्य घातकजनोऽन्यो नास्ति येनावामीदृशेषु अतिनृशंसेषु नियोगेषु नियोजयति । ( किं अज्जचाणक्कस्स घादअजणो अण्णो णत्थि जेण अह्मे ईदिसेसु अदिणिसंसेसु णिओएसु णिओएदि । )

**सिद्धा०**—वयस्य, को जीवलोके जीवितुकाम आर्यचाणक्यस्याज्ञप्तिं प्रतिकूलयति । तदेहि चण्डालवेशधारिणौ भूत्वा चन्दनदासं वध्यस्थानं नयावः । ( वअस्स को जीवलोए जीविदुकामो अज्जचाणक्कस्स आणत्तिं पडिकूलेदि । ता एहि चण्डालवेसधारिणा भविअ चन्दणदासं वज्झठ्ठाणं णएम । )

( इत्युभौ निष्क्रान्तौ )

। प्रवेशकः ।

( ततः प्रविशति रज्जुहस्तः पुरुषः )

**पुरुषः**—

**षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी ।**
**चाणक्यनीतिरज्जू रिपुसंयमनोद्यता जयति ॥ ४ ॥**

---

**टिप्पणी**—**उदुम्बरनामधेयेन**—यह चाणक्य का गुप्तचर है । इसका काम है प्रच्छन्न रूप से राक्षस के आसपास रहना और सारी सूचनाओं को चाणक्य के पास गुप्त रूप से भेजना ।

**अनुसन्धीयमानः**—अनु + सम् + √धा + शानच् कर्मणि + विभक्त्यादिकार्यम् ॥

**शब्दार्थः**—नन्दराज्यप्रत्यानयेन = नन्द के राज्य को वापस ले लेने में, कृतव्यवसायः = प्रयत्नशील, अकृतार्थः = असफल होकर । तर्कयामि = सोचता हूँ । अधन्यस्य = अभागे का । आज्ञप्त्या = आज्ञा से, व्यापादयितव्यः = वध किया जानेवाला है ।

**समिद्धार्थक**—मित्र, नन्द के राज्य को वापस ले लेने में उस तरह से प्रयत्नशील अमात्य राक्षस (मलयकेतु के शिविर से) निकल कर इस समय असफल होकर फिर इसी पाटलिपुत्र में आया गया है।

**सिद्धार्थक**—मित्र, चन्दनदास के स्नेह के कारण (आया है—ऐसा मैं) सोचता हूँ।

**समिद्धार्थक**—मित्र, चन्दनदास का (वन्धन से) मोक्ष-सा देख रहा हूँ।

**सिद्धार्थक**—इस अभागे का मोक्ष कहाँ से ? उसे तो इस समय आर्य चाणक्य की आज्ञा से हम दोनों के द्वारा वधस्थान में लेजाकर वध किया जानेवाला है।

**समिद्धार्थक**—(क्रोध के साथ) क्या आर्य चाणक्य के (पास) दूसरा जल्लाद नहीं है जिससे हम दोनों को ऐसे अत्यन्त क्रूर कार्यों में लगा रहे हैं।

**सिद्धार्थक**—मित्र, (इस) संसार में जीने की इच्छावाला कौन (व्यक्ति) आर्य चाणक्य की आज्ञा को अन्यथा कर सकता है। तो आओ, चाण्डाल के वेश को धारण करनेवाला होकर (अर्थात् चाण्डाल के वेश को धारण करके हम दोनों) चन्दनदास को फाँसी देने के स्थान पर ले चलें॥

(इस प्रकार दोनों निकल गये)

॥ प्रवेशक समाप्त ॥

( तदनन्तर हाथ में रस्सी लिये हुए पुरुष प्रवेश करता है )

**नीति के पक्ष में—**

**पुरुष**—छः ( सन्धि, विग्रह, यान, आसन, द्वैधीभाव और आश्रय ) गुणों के कारण ( शत्रु के लिए ) दुर्भेद्य, ( साम, दाम, भेद और दण्ड इन चार ) उपायों की परम्परा से निर्मित, पाशरूपी मुखवाली, शत्रु ( राक्षस ) को वश में करने के लिए तत्पर, चाणक्य की नीतिरूपी रस्सी सर्वश्रेष्ठ है ॥ ४ ॥

---

घातकजनः = मारनेवाला, जल्लाद, अतिनृशंसेषु = अत्यन्त क्रूर, नियोगेषु = कार्यों में, नियोजयति = लगा रहे हैं। नयावः = ले चलें ॥

**टीका**—नन्दराज्यप्रत्यानयने—नन्दराज्यस्य = नन्दसाम्राज्यस्य प्रत्यानयने = पुनर्ग्रहणे; कृतव्यवसायः—कृतः = विहितः व्यवसायः = उद्योगः येन तादृशः; अकृतार्थः—अकृतः = अपूर्णः अर्थः = मनोरथः यस्य सः अकृतार्थः = निष्फलमनोरथः। तर्कयामि= अनुमिनोमि। अधन्यस्य = हतभाग्यस्य। आज्ञप्त्या = आज्ञया, व्यापादयितव्यः = हन्तव्यः। घातकजनः = चाण्डालः, हननकर्तेत्यर्थः, अतिनृशंसेषु = अत्यक्रूरेषु, नियोगेषु = कार्येषु, नियोजयति = प्रेरयति। नयावः = प्रापयावः।

**टिप्पणी—आज्ञप्त्या**—आ + √ज्ञा + णिच् + क्तिन् भावे + विभक्तिकार्यम् = आज्ञप्तिः तया।

छग्गुणसंजोअदिढा उवाअपरिवाडिघडिअपासमुही ।
चाणक्कणीतिरज्जू रिपुसंजमअज्जआ जअदि ॥ ४ ॥

( परिक्रम्यावलोक्य च ) एष स प्रदेश आर्यचाणक्याय उदुम्बरेण कथितो यत्र मया आर्यचाणक्याज्ञप्त्या अमात्यराक्षसः प्रेक्षितव्यः । ( विलोक्य ) कथमेष खल्वमात्यराक्षसः कृतशीर्षावगुण्ठन इत एवागच्छति । तद्यावदेभिर्जीर्णोद्यानपादपैरन्तरितशरीरः प्रेक्षे कुत्रासनपरिग्रहं करोतीति । ( एसो सो पदेसो अज्जचाणक्कस्स उदुम्बरेण कहिदो जहिं मए अज्जचाणक्काणत्तिए अमच्चरक्खसो पेक्खिदव्वो । कहं एसो क्खु अमच्चरक्खसो किद-सीसावगुण्ठणो इदो एव्व आअच्छइ । ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अतरिद-सरीरो पेक्खामि कहिं आसनपरिग्गहं करेदि त्ति । ( परिक्रम्य स्थितः )

---

**प्रवेशकः**—प्रवेशयति इति प्र + $\sqrt{}$विश् + ण्वुल् कर्तरि + विभक्तिकार्यम् । प्रवेशक का अर्थ है—परिचायक, निम्न पात्रों द्वारा अभिनीत विष्कम्भक । इसमें श्रोता को रङ्गमञ्च पर अप्रस्तुत घटना का आगे होनेवाली बातों की जानकारी के लिए ज्ञान कराया जाता है । यह प्रथम अङ्क के आरम्भ में या अन्तिम अङ्क की समाप्ति पर कभी प्रयुक्त नहीं होता । साहित्य-दर्पण में इसका लक्षण इस प्रकार है—'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥'

**षड्गुणेति**—

**अन्वयः**—षड्गुणसंयोगदृढा, उपायपरिपाटीघटितपाशमुखी, रिपुसंयमनोद्यता, चाणक्यनीतिरज्जुः, जयति ॥ ४ ॥

**नीतिपक्षे**—

**शब्दार्थः**—षड्गुणसंयोगदृढा = छः ( सन्धि, विग्रह, यान, आसन, द्वैधीभाव और आश्रय ) गुणों के कारण दुर्भेद्य, उपायपरिपाटीघटितपाशमुखी = ( साम, दाम, भेद और दण्ड इन चार ) उपायों की परम्परा से निर्मित पाशरूपी मुखवाली, रिपुसंयमनोद्यता = शत्रु ( राक्षस ) को वश में करने के लिए तत्पर, चाणक्यनीतिरज्जुः = चाणक्य की नीतिरूपी रस्सी, जयति = सर्वश्रेष्ठ है ॥ ४ ॥

**रज्जुपक्षे**—

**शब्दार्थः**—षड्गुणसंयोगदृढा = छः सूत्रों के मेल के कारण अत्यन्त मजबूत, उपायपरिपाटीघटितपाशमुखी = अनेकविध कौशल से निर्मित पाशाग्रवाली, रिपुसंयमनोद्यता = शत्रु को बाँधने में उद्यत, चाणक्यनीतिरज्जुः = चाणक्य की नीति के समान ( यह ) रस्सी, जयति = सर्वोत्कृष्ट है ॥ ४ ॥

**टीका**—**नीतिपक्षे—षड्गुणेति**—षड्गुणसंयोगदृढा—षण्णाम् = सन्धिविग्रहयानासनद्वैधीभावाश्रयाख्यानां षण्णां गुणानां संयोगेन = सहघटनया दृढा = दुर्भेद्येत्यर्थः; उपायपरिपाटीघटितपाशमुखी—उपायानाम् = सामदामभेददण्डादीनाम् युक्तीनाम् परिपाटी = क्रमरचना तया घटितः = सम्पादितः यः पाशः = वागुरा तद्रूपं मुखं यस्याः तादृशी; रिपुसंयमनोद्यता—रिपोः = शत्रोः संयमने = नियन्त्रणे उद्यता = तत्परा; चाणक्यनीति-

रस्सी के पक्ष में—

छः सूत्रों के मेल के कारण अत्यन्त मजबूत, अनेकविध कौशल से निर्मित पाशाग्रवाली, शत्रु को बाँधने में (वश में करने में) उद्यत, चाणक्य की नीति के समान (यह) रस्सी सर्वोत्कृष्ट है ॥ ४ ॥

(घूम कर और देख कर) आर्य चाणक्य के लिए (अर्थात् आर्य चाणक्य से) उदुम्बर के द्वारा बतलाया गया यह वही स्थान है जहाँ मुझे आर्य चाणक्य की आज्ञा से अमात्य राक्षस को देखना है। (देखकर) क्या यह अमात्य राक्षस शिर पर पर्दा डाले हुए इधर ही आ रहा है। तो जब तक जीर्ण उद्यान के इन वृक्षों से शरीर को छिपाये हुए देखता हूँ (कि यह) कहाँ आसन ग्रहण करता है (अर्थात् कहाँ बैठता है)।

(घूम कर खड़ा हो जाता है)

---

रज्जुः—चाणक्यस्य = कौटिल्यस्य नीतिः = नयः एव रज्जुः = दाम; जयति = सर्वोत्कर्षेण वर्तते ॥ ४ ॥

**रज्जुपक्षे—**

**षड्गुणेति।** षड्गुणसंयोगदृढा—षण्णां गुणानाम् = तन्तूनाम् संयोगेन दृढा = परिपुष्टा; उपायपरिपाटीघटितपाशमुखी—उपायानाम् = विविधानां कौशलानाम् परिपाट्या = पद्धत्या घटितः = निर्मितः पाशः = मृगपश्वादिबन्धनम् ('पाशस्तु मृगपश्वादिबन्धने' इति हैमः) मुखे = अग्रभागे यस्याः तादृशी; रिपुसंयमनोद्यता—रिपोः = शत्रोः संयमने = बन्धने उद्यता = कृतसंकल्पा, तत्परेति यावत्; चाणक्यनीतिरज्जुः—चाणक्यस्य नीतिः = नयः इव रज्जुः = दाम; जयति = सर्वोत्कर्षेण वर्तते ॥ ४ ॥

**टिप्पणी—रज्जुहस्तः पुरुषः**—इसका नाम निपुणक है। यह चाणक्य का गुप्तचर है।

**पाशमुखी**—वस्तुतः चाणक्य की नीतिरूपी रस्सी का सम्पूर्ण अङ्ग कार्य कर चुका है। अब पाशरूपी मुख का कार्य होना है। इसी पाश (फन्दे) में राक्षस (शत्रु) बँधेगा।

इस श्लोक में रूपक और उपमा तथा श्लेष एवं काव्यलिङ्ग अलङ्कारों की संसृष्टि है। इसमें प्रयुक्त छन्द का नाम है आर्या। लक्षण—

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या ॥ ४ ॥

**शब्दार्थः**—आर्यचाणक्याज्ञप्त्या = आर्य चाणक्य की आज्ञा से। कृतशीर्षावगुण्ठनम् = शिर पर पर्दा डाले हुए। अन्तरितशरीरः = शरीर को छिपाये हुए। आसनपरिग्रहम् = आसनग्रहण ॥

**टीका**—आर्यचाणक्याज्ञप्त्या—आर्यचाणक्यस्य = आर्य कौटिल्यस्य आज्ञप्त्या = आज्ञया। कृतशीर्षावगुण्ठनम्—कृतम् = विहितम् शीर्षस्य = शिरसः अवगुण्ठनम् =

( ततः प्रविशति यथानिर्दिष्टः सास्रो राक्षसः )

राक्ष०—( सास्रम् ) कष्टं भोः कष्टम् ।

उच्छिन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।
आप्तैरप्यनवाप्तपौरुषफलैः कार्यस्य धूरुज्झिता
किं कुर्वन्त्वथवोत्तमाङ्गरहितैरङ्गैरिव स्थीयते ॥ ५ ॥

अपि च—

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन्किमिह करवाम स्थिरमपि
प्रयत्नं नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥

---

आच्छादनम् येन तादृशः । अन्तरितशरीरः—अन्तरितम् = तिरोहितम् शरीरम् = वपुः यस्य स तादृशः । आसनपरिग्रहम्—आसनस्य = पीठस्य ( 'पीठमासनम्' इत्यमरः ) परिग्रहम् = स्वीकरणम् करोतीति ॥

उच्छिन्नाश्रय इति—

अन्वयः—श्रीः, उच्छिन्नाश्रयकातरा, कुलटा, इव, गोत्रान्तरे, गता; गतानुगतिकाः, त्यक्तानुरागाः, प्रजाः, ताम्, एव, अनुगताः, अनवाप्तपौरुषफलैः, आप्तैः, अपि, कार्यस्य, धूः, उज्झिता; अथवा, ( ते ) किम्, कुर्वन्तु ? ( तैः ), उत्तमाङ्गरहितैः, अङ्गैः, इव, स्थीयते ॥ ५ ॥

शब्दार्थः—श्रीः = लक्ष्मी, उच्छिन्नाश्रयकातरा = आश्रय के विनष्ट हो जाने के कारण दुःखी, कुलटा = व्यभिचारिणी स्त्री के, इव = समान, गोत्रान्तरे = दूसरे कुल में ( अर्थात् मौर्य के खानदान में ), गता = चली गयी; गतानुगतिकाः = अन्धानुकरण करने वाली, त्यक्तानुरागाः = ( नन्दकुल में ) अनुरागरहित, प्रजाः = प्रजाएँ, ताम् = उस ( लक्ष्मी ) को, एव = ही, अगनुगताः = पीछे-पीछे चली गयीं; अनवाप्तपौरुषफलैः = ( अपने ) पुरुषार्थ के पुरस्कार ( फल ) को न प्राप्त करने वाले, आप्तैः = विश्वासपात्र ( व्यक्तियों ) के द्वारा, अपि = भी, कार्यस्य = ( प्रारब्ध ) कार्य का, धूः = भार, उज्झिता = छोड़ दिया गया है; अथवा = अथवा, (ते = वे बेचारे), किम् = क्या, कुर्वन्तु = करें; ( तैः = उनके द्वारा ), उत्तमाङ्गरहितैः = शिरविहीन, अङ्गैः = अङ्गों के, इव = समान, स्थीयते = रहा जा रहा है ॥ ५ ॥

टीका—उच्छिन्नाश्रय इति । श्रीः = लक्ष्मीः, उच्छिन्नाश्रयकातरा—उच्छिन्नः = विनष्टः आश्रयः = अवलम्बनम् यस्याः सा उच्छिन्नाश्रया = विनष्टाश्रया सा चासौ कातरा=दुःखिता; कुलटा=पुंश्चली ( 'पुंश्चली चर्षिणी बन्धक्यसती कुलटेत्वरी' इत्यमरः ), इव=यथा, गोत्रान्तरे = कुलान्तरे, मौर्यकुले इत्यर्थः, गता=संक्रान्ता; गतानुगतिकाः—गतस्य = पूर्वं प्रस्थितस्य अनुगतिः = अनुसरणम् याभिस्ताः, अन्धलग्नाः इत्यर्थः, त्यक्ता-

( तत्पश्चात् पहले बतलायी गयी अवस्था वाला हाथ में शस्त्र लिये हुए प्रवेश करता है )

राक्षस—( आँखों में आँसू भरकर ) कष्ट है, अरे कष्ट है।

लक्ष्मी, आश्रय के विनष्ट हो जाने के कारण दुःखी व्यभिचारिणी स्त्री के समान, दूसरे कुल में ( अर्थात् मौर्य के खान-दान में ) चली गयी; अन्धानुकरण करनेवाली ( नन्दकुल में ) अनुरागरहित प्रजाएँ उस ( लक्ष्मी ) के ही पीछे-पीछे चली गयीं; ( अपने ) पुरुषार्थ के पुरस्कार ( फल ) को न प्राप्त करनेवाले विश्वासपात्र ( व्यक्तियों ) के द्वारा भी ( प्रारब्ध ) कार्य का भार छोड़ दिया गया है; अथवा ( वे बेचारे ) क्या करें ? ( उनके द्वारा ) शिरविहीन अङ्गों के समान ( निर्जीव-सा ) रहा जा रहा है। ( अर्थात् स्वामी के बिना वे व्यक्ति भी निष्प्राण-से हो गये हैं ) ॥ ५ ॥

और भी—

लक्ष्मी उत्तम कुलवाले संसार के अधिपति पति महाराज ( नन्द ) को छोड़कर उद्धत शूद्रा के समान, एक दोषमात्र से, मौर्य के पास चली गयी। ( और जाकर ) इस मौर्य में ( अर्थात् मौर्य के पास ) स्थिर ( भी ) हो गयी। इस विषय में ( हम ) क्या करें ? ( क्योंकि ) जिन हमारे दृढ़ भी प्रयत्न को, शत्रु के समान, भाग्य विफल कर देता है ॥ ६ ॥

---

नुरागाः—त्यक्तः = नन्दकुले परित्यक्तः अनुरागः = प्रेम याभिस्तादृश्यः, प्रजाः = प्रकृतयः, तामेव = लक्ष्मीमेव, अनुगताः = अनुसृताः, अनुसृत्य मौर्ये संसक्ताः इत्यर्थः; अनवाप्त-पौरुषफलैः—अनवाप्तम् = अनधिगतम् पौरुषस्य = पुरुषकारस्य फलम् = पुरस्कारः यैस्तैः; आप्तैः = हिततमैः अपि, कार्यस्य = आरब्धस्य कृत्यस्य, धूः = भारः, उज्झिता = परित्यक्ता ; अथवा ते किं कुर्वन्तु = किं विदधतु ? ते वराकाः न किञ्चिदपि कर्तुं शक्नुवन्तीत्यर्थः; तैः आप्तैः, उत्तमाङ्गरहितैः—उत्तमाङ्गेन = शिरसा रहितैः = हीनैः, अङ्गैः = अवयवैः, इव = यथा; स्थीयते = वृत्यते। स्वामिनः अभावे ते न किञ्चित्कर्तुं पार्यन्ते इत्यर्थः ॥ ५ ॥

**टिप्पणी—राप्तैरपि**—विश्वस्त व्यक्तियों ने सामान्य प्रजाओं की भाँति चन्द्रगुप्त से जाकर मेल नहीं किया। हाँ, वे लोग चन्द्रगुप्त का विरोध करना अवश्य छोड़ दिये। इस तरह के व्यक्ति हैं—विराधगुप्त आदि।

इस श्लोक में उपमा एवं काव्यलिङ्ग अलङ्कार तथा शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥ ५ ॥

**पतिं त्यक्त्वेति—**

**अन्वयः**—श्रीः, उच्चैरभिजनम्, भुवनपतिम्, पतिम्, देवम्, त्यक्त्वा, अविनीता, वृषली, इव, छिद्रेण, वृषलम्, गता; अस्मिन्, स्थिरीभूता, च; इह, किम्, करवाम; येषाम्, नः, स्थिरम्, अपि, प्रयत्नम्, द्विषद्, इव, दैवम्, विफलयति ॥ ६ ॥

मया हि—

देवे गते दिवमतद्विधमृत्युयोग्ये
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ।
तस्मिन्हते तनयमस्य तथाप्यसिद्धिर्-
दैवं हि नन्दकुलशत्रुरसौ न विप्रः ।। ७ ।।

---

**शब्दार्थः**—श्रीः = लक्ष्मी, उच्चैरभिजनम् = उत्तम कुलवाले, भुवनपतिम् = संसार के अधिपति, पतिम् = पति, देवम् = महाराज ( नन्द ) को, त्यक्त्वा = छोड़कर, अविनीता = उद्धत, वृषली = शूद्रा के, इव = समान, छिद्रेण = एक दोषमात्र से, वृषलम् = मौर्य के पास, गता = चली गयी; अस्मिन् = इस मौर्य में, स्थिरीभूता = स्थिर हो गयी, च = भी; इह = इस विषय में, किम् = क्या, करवाम = करें; येषाम् = जिन, नः = हमारे, स्थिरम् = दृढ, अपि = भी, प्रयत्नम् = प्रयत्न को, द्विषद् = शत्रु के, इव = समान, दैवम् = भाग्य, विफलयति = विफल कर देता है ।। ६ ।।

**टीका—पतिं त्यक्त्वेति ।** श्रीः = लक्ष्मीः, उच्चैरभिजनम्—उच्चैः = उत्तमः अभिजनः = कुलम् ( 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः ) यस्य तादृशम्; भुवनपतिम् = जगत्पतिम्, पतिम् = भर्तारम्, देवम् = महाराजम् नन्दमित्यर्थः; त्यक्त्वा= परित्यज्य; अविनीता = उद्धता, निर्मर्यादेत्यर्थः, वृषलीव = शूद्रेव, छिद्रेण = एकेन दोषेणेत्यर्थः, नन्देन कृतचाणक्यविप्रावमानेनेति भावः; वृषलम् = मौर्यम्, शूद्रमितियावत्; गता = आश्रिता; न केवलमाश्रितैवापितु अस्मिन् = वृषले; स्थिरीभूता = अचलासंवृत्ता; अनेन लक्ष्म्यास्तत्र दृढानुरागः सूचितः; इह = एतस्मिन् विषये; किं करवाम = विदधाम, वयमिति शेषः; येषां नः = अस्माकम्; स्थिरमपि = दृढमपि; प्रयत्नम् = उद्योगम्, द्विषद् = शत्रुः, इव = यथा, दैवम् = भाग्यम्; विफलयति = विनाशयति । शत्रुर्भूत्वा दैवमेवास्माकं प्रयत्नं विनाशति चेत्किं कुर्मः इति भावः ।। ६ ।।

**टिप्पणी—उच्चैरभिजनम्**—इससे नन्द की कुलीनता सूचित की गयी है ।

**वृषलम्**—वृषल कह कर चन्द्रगुप्त को हीन वंश का बतलाया गया है ।

**प्रयत्नम्**—प्र + यत् + नङ् + विभक्तिकार्यम् ।

इस श्लोक में दीपक, उपमा, अतिशयोक्ति तथा काव्यलिङ्ग सङ्कर अलङ्कार और शिखरिणी छन्द है । छन्द का लक्षण—

रसैरुद्रैश्छिन्ना यमनसभलागाः शिखरिणी ।। ६ ।।

**देवे गत इति**—

**अन्वयः**—अतद्विधमृत्युयोग्ये, देवे, दिवम्, गते, तम्, शैलेश्वरम्, अधिकृत्य, प्रयत्नः, कृतः; तस्मिन्, हते, अस्य, तनयम्, ( अधिकृत्य, प्रयत्नः, कृतः ); तथापि, असिद्धिः, ( जाता ); हि, दैवम्, नन्दकुलशत्रुः, ( अस्ति ); असौ, विप्रः, न ।। ७ ।।

**शब्दार्थः**—अतद्विधमृत्युयोग्ये = उस प्रकार की ( अनुचित ) मृत्यु के अयोग्य,

मेरे द्वारा तो—

उस प्रकार की (अनुचित) मृत्यु के अयोग्य महाराज (नन्द) के स्वर्ग चले जाने पर उस पर्वतक को आश्रय बनाकर (नन्दकुल की राजलक्ष्मी को वापस लाने के लिए) उद्योग किया गया। उस (पर्वतक) के मारे जाने पर इसके पुत्र (मलयकेतु) को (आश्रय बनाकर यत्न किया गया); तो भी असफलता (ही हुई); क्योंकि भाग्य नन्दकुल का शत्रु (है) यह ब्राह्मण (चाणक्य) नहीं (नन्दकुल का शत्रु है) (अर्थात् भाग्य ही हमारा शत्रु है अन्यथा बेचारा यह ब्राह्मण क्या कर सकता है) ॥७॥

---

देवे = महाराज ( नन्द ) के, दिवम् = स्वर्ग को, गते = चले जाने पर, तम् = उस, शैलेश्वरम् = पर्वतक को, अधिकृत्य = आश्रय बना कर, प्रयत्नः = उद्योग, कृतः = किया गया; तस्मिन् = उसके, हते = मारे जाने पर, अस्य = इसके, तनयम् = पुत्र को, ( अधिकृत्य = आश्रय बना कर, प्रयत्नः = यत्न, कृतः = किया गया ); तथापि = तो भी, असिद्धिः = असफलता, ( जाता = हुई ), हि = क्योंकि, दैवम् = भाग्य, नन्दकुलशत्रुः = नन्दकुल का शत्रु, ( अस्ति = है ), असौ = यह, विप्रः = ब्राह्मण, न = नहीं ( नन्दकुल का शत्रु है )॥ ७ ॥

टीका—देवे गत इति। अतद्विधमृत्युयोग्ये—तद्विधस्य = तादृशस्य विप्रचाणक्येन कृतया अभिचारक्रियया जातस्येत्यर्थः मृत्योः = मरणस्य, योग्यः = अर्हः न भवतीति अतद्विधमृत्युयोग्यः तस्मिन्; देवे = राजनि नन्दे, दिवम् = स्वर्गम्, गते = प्राप्ते, तम् = चन्द्रगुप्तसाहाय्येन प्रसिद्धमित्यर्थः, शैलेश्वरम् = पर्वतकं नृपम्, अधिकृत्य = अवलम्ब्य, प्रयत्नः = उद्योगः, कृतः = विहितः, तथा तस्मिन् = पर्वतके, हते = घातिते, अस्य = पर्वतकस्य, तनयम् = पुत्रम्, आधिकृत्य प्रयत्नः कृतः इति शेषः, तथापि = एतादृशे बहुविधे प्रयत्ने कृतेऽपि, असिद्धिः = प्रयत्नविफलता, जातेतिशेषः; प्रयत्नवैफल्ये भाग्यस्य प्राबल्यं चाणक्यस्याकिञ्चित्करत्वं वर्णयति—हि = यतः, दैवम् = भाग्यम्, नन्दकुलशत्रुः—नन्दकुलस्य = नन्दान्वयस्य शत्रुः = रिपुः, असौ = नन्दकुलशत्रुत्वेन प्रसिद्धः, विप्रः = ब्राह्मणः चाणक्यः, न = न शत्रुः, नानिष्टं कर्तुं समर्थः इति भावः। दैवमेवात्र प्रबलं किमनेन ब्राह्मणेन कर्तुं शक्यमित्यनादरे विप्र इत्युक्तम् ॥७॥

टिप्पणी—अतद्विधमृत्युयोग्ये—नन्द की मृत्यु चाणक्य के द्वारा किये गये 'मारण' के प्रयोग से हुई थी। इस तरह की मृत्यु उनके जैसे व्यक्ति के लिए उचित न थी। उन्हें तो समराङ्गण में वीरोचित ढंग से प्राणों को छोड़ना शोभा की बात हो सकती थी।

अधिकृत्य—अधि + √कृ + ल्यप् तुगागमः।

इस श्लोक में काव्यलिङ्ग, परिसंख्या तथा अतिशयोक्ति अलङ्कारों की संसृष्टि है। इसमें प्रयुक्त छन्द का नाम है—वसन्ततिलका। छन्द का लक्षण—

उक्ता वसन्ततिलका तभजा जगौ गः ॥७॥

अहो विवेकशून्यता म्लेच्छस्य । कुतः ?—

**यो नष्टानपि बीजनाशमधुना शुश्रूषते स्वामिनस्**
**तेषां वैरिभिरक्षतः कथमसौ सन्धास्यते राक्षसः ।**
**एतावद्धि विवेकशून्यमनसा म्लेच्छेन नालोचितं**
**दैवेनोपहतस्य बुद्धिरथवा सर्वा विपर्यस्यति ॥ ८ ॥**

तदिदानीमपि तावदरातिहस्तगतो विनश्येन्न तु राक्षसश्चन्द्रगुप्तेन सह सन्दधीत । अथवा मम काममकृत्यसन्ध इति वरमयशो न तु शत्रुवञ्चनपराभूत इति । ( समन्तादवलोक्य सास्रम् ) एतास्ता देवपादक्रमणपरिचयपवित्रीकृततलाः कुसुमपुरोपकण्ठभूमयः । इह हि—

---

**यो नष्टानिति—**

**अन्वयः**—यः, अधुना, अपि, बीजनाशम्, नष्टान्, स्वामिनः, शुश्रूषते; असौ, राक्षसः, अक्षतः, (सन्), तेषाम्, वैरिभिः, कथम्, सन्धास्यते; एतावत्, हि, विवेकशून्यमनसा, म्लेच्छेन, न, आलोचितम्; अथवा, दैवेन, उपहतस्य, सर्वा, बुद्धिः, विपर्यवस्यति ॥८॥

**शब्दार्थः**—यः = जो (राक्षस), अधुना = अब, अपि = भी, बीजनाशम् = समूल, नष्टान् = नष्ट, स्वामिनः = स्वामियों की, शुश्रूषते = शुश्रूषा कर रहा है; असौ = वह, राक्षसः = राक्षस, अक्षतः = स्वस्थ, (सन् = रहता हुआ), तेषाम् = उन (स्वामियों) के, वैरिभिः = शत्रुओं के साथ, कथम = कैसे, सन्धास्यते = सन्धि करेगा ? एतावत् = इतना, हि = अपि, विवेकशून्यमनसा = युक्तायुक्त विचार से शून्य मनवाले (अर्थात् विमूढ़), म्लेच्छेन = म्लेच्छ (मलयकेतु) के द्वारा, न = नहीं, आलोचितम् = विचार किया गया, अथवा = अथवा, दैवेन = भाग्य से, उपहतस्य = मारे गये, विहीन (व्यक्ति) की, सर्वा = पूर्ण, बुद्धिः = विचारशक्ति, विपर्यवस्यति = विपरीत हो जाती है, अस्त-व्यस्त हो जाती है ॥८॥

**टीका—योनष्टानिति** । यः = स्वस्वामिभक्त्याप्रसिद्धः राक्षसः इत्यर्थः, अधुना = सम्प्रति, अपि = च, अर्थात् स्वार्थसिद्धिकामनावसरेऽपगतेऽपीत्यर्थः; बीजनाशम् = समूलनाशम्, नष्टान् = मृतान्, स्वामिनः = भर्तॄन्, शुश्रूषते = सेवते, तेषामरीन् विनष्टान् त्वा सेवितुमिच्छतीत्यर्थः; असौ = सः, राक्षसः, अक्षतः = अभिन्नशरीरः दृढगात्रः इत्यर्थः; सन्; तेषाम् = स्वामिनाम्, नन्दानामित्यर्थः; वैरिभिः = शत्रुभिः सह, कथम् = केनप्रकारेण; सन्धास्यते = सन्धिकरिष्यति, न कथमपीत्यर्थः; एतावत् = एतन्मात्रम्, हीतिनिश्चये अपीत्यर्थे वा; विवेकशून्यमनसा—विवेकेन = युक्तायुक्तविचारेण, शून्यम् = रिक्तम् मनः यस्य तादृशेन; म्लेच्छेन = मलयकेतुनेत्यर्थः; न आलोचितम् = न विचारितम्; **अथवा** = अथवा नायं तस्यैव दोषः अपितु; **दैवेन** = भाग्येन; उपहतस्य = **विनाशितस्य;** जनस्येति शेषः, **सर्वा** = समग्रा, **बुद्धिः** = विचारशक्तिः; **विपर्यस्यति** = **विपरीता** जायते । विपरीतबुद्धेर्मरणमवश्यमित्यपि ध्वनितमिति ॥८॥

म्लेच्छ (मलयकेतु) की विमूढ़ता आश्चर्यजनक है। क्योंकि—

जो (राक्षस) अब भी समूल नष्ट (अपने) स्वामियों की शुश्रूषा कर रहा है, वह राक्षस स्वस्थ (रहता हुआ) उन (स्वामियों) के शत्रुओं के साथ कैसे सन्धि करेगा? इतना भी विमूढ़ म्लेच्छ (मलयकेतु) के द्वारा नहीं विचार किया गया। अथवा भाग्य से विहीन (व्यक्ति) की सम्पूर्ण विचारशक्ति (ही) अस्त-व्यस्त हो जाती है ॥८॥

तो अब भी शत्रुओं के हाथ में पड़ा हुआ राक्षस भले ही नष्ट हो जाय किन्तु चन्द्रगुप्त के साथ सन्धि नहीं करेगा। अथवा (मलयकेतु को चन्द्रगुप्त का राज्य न दे सकने के कारण राक्षस) असत्यप्रतिज्ञ है—इस प्रकार का अपयश मेरे लिए श्रेष्ठ है, किन्तु (राक्षस) शत्रु (चाणक्य) की जालसाजी से पराजित हो गया—यह (लोगों का कथन अच्छा) नहीं। (चारों ओर देखकर आँखों में आँसू भरकर) महाराज (नन्द) के चरण-विन्यास के परिचय से पवित्र की हुई पृष्ठवाली (अर्थात् महाराज नन्द के चलने से पवित्र) यह वही (पूर्व परिचित), कुसुमपुर के आसपास की भूमियाँ हैं।
यहाँ—

---

**टिप्पणी—म्लेच्छस्य**—प्राचीनकाल में भिन्न वेश, भाषा तथा संस्कारवालों को लोग म्लेच्छ कहते हैं। वस्तुतः यहाँ म्लेच्छ शब्द का प्रयोग निन्दा के रूप में प्रयुक्त हुआ है।

**बीजनाशं नष्टान्**—जिनके वंश का बीज भी अवशिष्ट न रहा हो। बीजानि इव नष्टा इति बीज + √नश् + णमुल् भावे बीजनाशं नष्टाः।

**अक्षतः**—नञ् + √क्षण् + क्त + विभक्तिकार्यम्।

इस श्लोक में अर्थान्तरन्यास एवं शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥८॥

**शब्दार्थः**—अरातिहस्तगतः = शत्रुओं के हाथ में पड़ा हुआ, सन्दधीत = सन्धि करेगा। कामम् = यह अव्यय सहमति को सूचित करता है, असत्यसन्धः = असत्य-प्रतिज्ञ, झूठी प्रतिज्ञावाला, वरम् = श्रेष्ठ है, अच्छा है, शत्रुवञ्चनपराभूतः = शत्रु (चाणक्य) की जालसाजी (धोखा) से पराजित। देवपादक्रमणपरिचयपवित्रीकृततलाः = महाराज (नन्द) के चरण-विन्यास के परिचय से पवित्र की हुई पृष्ठवाली (अर्थात् राजा नन्द के चलने से पवित्र), कुसुमपुरोपकण्ठभूमयः = कुसुमपुर के आसपास की भूमियाँ ॥

**टीका**—अरातिहस्तगतः—अरातीनाम् = शत्रूणाम् चाणक्यादीनामित्यर्थः हस्ते = करे अधिकारे इत्यर्थः। गतः = पतितः; सन्दधीत = सन्धिं कुर्यात्; कामम् = स्वीकृति-बोधकमिदमव्ययपदम्; असत्यसन्धः—असत्या = अनृता सन्धा=प्रतिज्ञा यस्य सः; वरम्= श्रेष्ठम्; शत्रुवञ्चनपराभूतः—शत्रोः=रिपोः, चाणक्यस्येत्यर्थः, वञ्चनेन=प्रतारणेन पराभूतः= तिरस्कृतः पराजितः इतियावत्, राक्षसः इति शेषः; देवपादक्रमणपरिचय पवित्रीकृत-तलाः—देवस्य = महाराजस्य नन्दस्येयावत् पादक्रमणस्य = चरणविक्षेपस्य चलनस्येति-भावः, यः परिचयः = अभ्यासः तेन पवित्रीकृतम् = पूतम्. तलम् = पृष्ठभागः यासां

शार्ङ्गाकर्षावमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजवितुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं
संप्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ।। ९ ।।

तत्क्व नु गच्छामि मन्दभाग्यः । ( विलोक्य ) भवतु दृष्टमेतज्जीर्णोद्यानम् । अत्र प्रविश्य कुतश्चिच्चन्दनदासप्रवृत्तिमुपलप्स्ये । अहो अलक्षितनिपाताः पुरुषाणां समविषमदशापरिणतयो भवन्ति । कुतः ?—

---

तादृश्यः; कुसुमपुरोपकण्ठभूमयः—कुसुमपुरस्य = पाटलिपुत्रस्य उपकण्ठभूमयः = प्रान्तभूमयः; सन्तीति शेषः ॥

**टिप्पणी—अथवा मम काममित्यदिः**—मलयकेतु ने राक्षस पर कलङ्क लगाया है कि अपनी प्रतिज्ञा के अनुसार मुझे राज्य न दिलाकर राक्षस चन्द्रगुप्त से मिल गया है । दूसरी ओर चाणक्य की जालसाजी से राक्षस मात होनेवाला है । अतः दोनों भाँति उसे कलंक ही मिलनेवाला है । किन्तु उसे असत्य प्रतिज्ञावाला होना मंजूर है, शत्रु की जालसाजी से अभिभूत कहा जाना नहीं ॥

**शार्ङ्गाकर्षावमुक्त इति—**

**अन्वयः**—देवेन, अत्र, देशे, शार्ङ्गाकर्षावमुक्तप्रशिथिलकविकाप्रग्रहेण, प्रजवितुरगम्, चलेषु, (लक्ष्येषु), चित्रम्, बाणमोक्षः, अकारि; अस्याम्, उद्यानराजौ, स्थितम्; इह, राजभिः, कथितम्; सम्प्रति, तैः, विना, इत्थम्, आलोक्यमानाः, कुसुमपुरभुवः, भूयसा, दुःखयन्ति ॥९॥

**शब्दार्थः**—देवेन = महाराज (नन्द) ने, अत्र = इस, देशे = स्थान में, शार्ङ्गाकर्षावमुक्तप्रशिथिलकविकाप्रग्रहेण = धनुष को खींचने से ढीली लगाम की डोरी के कारण, प्रजवितुरगम् = घोड़े के वेग से दौड़ने पर, चलेषु = चञ्चल, (लक्ष्येषु = लक्ष्यों के ऊपर), चित्रम् = आश्चर्यजनक ढङ्ग से, बाणमोक्षः = बाणों का छोड़ना, अकारि = किया था । (अर्थात् बाण छोड़ा था), अस्याम् = इस, उद्यानराजौ = उद्यान की कतार में, स्थितम् = बैठे थे; इह = यहाँ पर, राजभिः = राजाओं के साथ, कथितम् = वार्तालाप किया था; सम्प्रति = अब, तैः = उनके, विना = बिना, इत्थम् = इस प्रकार, आलोक्यमानाः = देखी जाती हुई, कुसुमपुरभुवः = कुसुमपुर की भूमियाँ, भूयसा = अत्यन्त, दुःखयन्ति = पीडित कर रही हैं ॥९॥

**टीका— शार्ङ्गाकर्षावमुक्त इति ।** देवेन = राज्ञा नन्देन; अत्र = अस्मिन्; देशे = प्रदेशे; शार्ङ्गाकर्षावमुक्तप्रशिथिलकविकाप्रग्रहेण—शार्ङ्गस्य = शृङ्गविकारस्य धनुषः आकर्षे = आकर्षणे ज्याकर्षणे इत्यर्थः, अवमुक्तः = पातितः अत एव प्रशिथिलः = अतिश्लथः कविकायाः = खलीनस्य ('कविका तु खलीनोऽस्त्री' इत्यमरः) प्रग्रहः = रश्मिः तेनहेतुना; प्रजवितुरगम्—प्रजवितः = प्रवृद्धवेगः तुरगः = अश्वः यस्मिन्

महाराज नन्द ने इस स्थान में धनुष को खींचने से ( अर्थात् धनुष को खींचने के समय) ढीली लगाम की डोरी के कारण घोड़े के वेग से दौड़ने पर चञ्चल लक्ष्यों के ऊपर आश्चर्यजनक ढंग से बाण छोड़ा था। इस उद्यान की कतार में (वे) बैठे थे। यहाँ पर राजाओं के साथ (उन्होंने) वार्तालाप किया था। अब उनके बिना (केवल हमारे द्वारा) देखी जाती हुई कुसुमपुर की (ये) भूमियाँ (हमें) अत्यन्त पीड़ित कर रही हैं ॥९॥

तो भाग्यहीन (मैं) किधर जाऊँ। ( देखकर ) अच्छा, यह जीर्णोद्यान ( मेरा ) देखा हुआ है। इसमें प्रवेश कर कहीं से चन्दनदास के समाचार को ज्ञात करूँगा। आश्चर्य है, पुरुषों के अनुकूल एवं प्रतिकूल अवस्थाओं के परिणाम अज्ञात रूप से आनेवाले (अर्थात् बिना किसी पूर्व कल्पना के आनेवाले) होते हैं। क्योंकि—

---

कर्मणि तद् यथा तथा; चलेषु = चञ्चलेषु; लक्ष्येषु = शरव्येष्विति शेषः, चित्रम् = आश्चर्यं यथा तथा; बाणमोक्षः—बाणानाम् = शराणाम् मोक्षः = प्रक्षेपः; अकरि = कृतः। अस्याम् = एतस्याम्, पुरोदृश्यमानायामित्यर्थः; उद्यान राजौ = उद्यानस्य = आरामस्य राजौ = पंक्तौ; स्थितम् = उषितम्; इह = अत्र, राजभिः = नृपैः सह, कथितम् = सम्भाषितम्। सम्प्रति = अधुना, नन्दे दिवङ्गते सतीत्यर्थः; तैः = नन्दैः, आदरार्थे बहुवचनम्, अथवा तैः = नन्दसमन्वितैः राजभिः, विना, इत्थम् = अनेन प्रकारेण, एकाकिना मयेति यावत्; आलोक्यमानाः = दृश्यमानाः, कुसुमपुरभुवः=कुसुमपुरभूमयः, भूयसा = भृशम्; दुःखयन्ति = पीडयन्ति। प्रियविरहे परिचितवस्तूनि भृशं पीडयन्तीतिसर्वलोकानुभवः ॥९॥

**टिप्पणी—प्रजवितुरगम्**—एक तो लक्ष्य हरिण आदि स्वयं चञ्चल हैं, दूसरी ओर लगाम के छूट जाने से घोड़ा भी अत्यन्त वेग से दौड़ रहा है। ऐसी परिस्थिति में ठीक निशाना लगाकर लक्ष्य को मार गिराना आश्चर्यजनक नहीं तो और क्या है?

इस श्लोक में स्वभावोक्ति तथा दीपक अलङ्कार तथा स्रग्धरा छन्द है। छन्द का लक्षण—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥९॥

**शब्दार्थः**—क्व नु = किधर, कहाँ, मन्दभाग्यः = अभागा, भाग्यहीन। कुतश्चित् = कहीं से, चन्दनदासप्रवृत्तिम् = चन्दनदास के समाचार को। अलक्षितनिपाताः = अदृष्ट है आना जिनका ऐसे, अज्ञात रूप से आनेवाले, समविषमदशापरिणतयः = अनुकूल एवं प्रतिकूल अवस्थाओं के परिणाम ॥

**टीका**—क्व नु = कुत्र; मन्दभाग्यः = भाग्यहीनः, अहमितिशेषः। कुतश्चित् = कस्मादपि स्थानात् जनाद्वा; चन्दनदासप्रवृत्तिम्—चन्दनदासस्य प्रवृत्तिम् = वृत्तान्तम्; अलक्षितनिपाताः—अलक्षितः = अतर्कितः निपातः = आगमः यासां ताः; समविषमदशापरिणतयः—समाः = समाः = स्वावस्थातुल्याः अनुकूलाः इत्यर्थः विषमाः= स्वावस्थाविपरीताः प्रतिकूलाः इत्यर्थः याः दशाः = अवस्थाः तासां परिणतयः = परिणामाः। मनुष्याणां दशापरिणामाः अतर्कितागमाः भवन्तीति भावः ॥

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनै-
यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः संप्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो
जीर्णोद्यानकमेष तस्कर इव त्रासाद्विशामि द्रुतम् ॥ १० ॥

अथवा येषां प्रसादादिदमासीत्त एव न सन्ति । ( नाट्येन प्रविश्यावलोक्य च ) अहो जीर्णोद्यानस्यारमणीयता । अत्र हि—

विपर्यस्तं सौधं कुलमिव महारम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदाम् ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नयाः
तृणैश्छन्ना भूमिर्मतिरिव कुनीतैरविदुषः ॥ ११ ॥

---

**पौरैरिति—**

**अन्वयः**—यः, अहम्, पुरा, राज्ञाम्, सहस्रैः, वृतः, राजा, इव, पौरैः, अंगुलिभिः, नवेन्दुवत्, निर्दिश्यमानः, पुरात्, शनैः, निरगमम्; सः, एव, वन्ध्यश्रमः, एषः, अहम्, सम्प्रति, भूयः, तत्र, एव, नगरे, तस्करः, इव, त्रासात्, द्रुतम्, जीर्णोद्यानकम्, विशामि ॥१०॥

**शब्दार्थः**—यः = जो, अहम् = मैं, पुरा = पहले (नन्द के जीवित रहने पर), राज्ञाम् = राजाओं के, सहस्रैः = हजारों से (अर्थात् हजार राजाओं से), वृतः = घिरे हुए, राजा = राजा के, इव = समान, पौरैः = पुरवासियों के द्वारा, अंगुलिभिः = अँगुलियों से, नवेन्दुवत् = द्वितीया के चन्द्रमा के समान, निर्दिश्यमानः = निर्दिष्ट किया जाता हुआ (अर्थात् दिखलाया जाता हुआ), पुरात् = नगर से, शनैः = शनैः शनैः, निरगमम् = निकलता था; सः = वह, एव = ही, वन्ध्यश्रमः = निष्फल परिश्रमवाला, एषः = यह, अहम् = मैं, सम्प्रति = इस समय, भूयः = फिर, तत्र = उस, एव = ही, नगरे = नगर में, तस्करः = चोर के, इव = समान, त्रासात् = भयवश, द्रुतम् = शीघ्र, जल्दी-जल्दी, जीर्णोद्यानकम् = जीर्णोद्यान में, विशामि = प्रवेश कर रहा हूँ ॥१०॥

**टीका—पौरैरिति** । यः अहम् = राक्षसः, पुरा = पूर्वम्, नन्दस्य जीवनकाले, राज्ञाम् = नृपाणाम्, करदानां नृपाणामित्यर्थः, सहस्रैः = बहुसंख्याभिः, बहुभिः राजभिरित्यर्थः, वृतः = आवृतः; राजा = सम्राडिति भावः, इव = यथा; पौरैः = पुरवासिभिः; अंगुलिभिः = करशाखाभिः; नवेन्दुवत्—नवेन्दुना = द्वितीयाचन्द्रमसा तुल्यं नवेन्दुवत् = द्वितीयाचन्द्रवत्; निर्दिश्यमानः = अन्योन्यं दर्श्यमानः; सन्; पुरात् = नगरात्; शनैः = मन्दम्, सलीलमिति भावः; निरगमम् = निर्गतवान्; स एव = पूर्वमेवं सत्कृत स एव; वन्ध्यश्रमः—वन्ध्यः = विफलः श्रमः = उद्योगः यस्य तादृशः एषः = रम्भत्रोपस्थितः; अहम्=राक्षसः; सम्प्रति = अस्मिन् काले; भूयः=मुहुः; तत्र=तस्मिन्नेव; नगरे=कुसुमपुरे; तस्करः=स्तेनः, ('चोरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः); इव=यथा; त्रासात्=भीतेः, लोकलोचनघातभयादित्यर्थः; द्रुतम् = झटिति; जीर्णोद्यानकम् = जीर्णोपवनम्; विशामि=प्रविशामि। स एवाहं किन्तु विपर्यस्तदशावशात् सम्प्रति महान् भेदो जातः ॥१०॥

जो मैं पहले (नन्द के जीवित रहने पर) हजार राजाओं से घिरे हुए राजा के समान, पुरवासियों के द्वारा अँगुलियों से द्वितीया के चन्द्रमा के समान दिखलाया जाता हुआ (इस) नगर से शनैः-शनैः निकलता था वही निष्फल परिश्रमवाला यह मैं इस समय फिर उसी नगर में चोर के समान भयवश जल्दी-जल्दी जीर्णोद्यान में प्रवेश कर रहा हूँ ॥१०॥

अथवा जिनकी कृपा से यह (सब) था वे ही (सम्प्रति) नहीं हैं। (अभिनय-पूर्वक प्रवेश करके और देखकर) जीर्णोद्यान का असुहावनापन दुःखदायक है। क्योंकि यहाँ—

महान् प्रयास से बना हुआ (यह) महल, (महान् धर्म आदि पुरुषार्थवाले) कुल के समान, अस्त-व्यस्त हो गया है। (यह) जलाशय, मित्रों के विनाश से सज्जन (व्यक्ति) के हृदय के समान सूख गया है। (यहाँ के) वृक्ष, गुणहीन राजा के संसर्ग से नीतियों के समान, फलविहीन हो गये हैं। (यहाँ की) भूमि, खराबनीतियों से अल्पज्ञ की बुद्धि के समान, तृणों से आच्छन्न हो गयी है ॥११॥

---

**टिप्पणी—निर्दिश्यमानः**—निर् + √दिश् + शानच् + विभक्त्यादिकार्यम्।

**द्रुतम्**—√द्रु + क्त + विभक्तिकार्यम्।

**जीर्णोद्यानकम्**—प्राचीनकाल में राजाओं तथा अत्यधिक सम्पन्न व्यक्तियों के पास नगर के बाहर स्थित जो मनोहर उद्यान रहता था उसे जीर्णोद्यान कहा जाता था। 'मृच्छकटिक' में भी इसी प्रकार के उद्यान का वर्णन बारम्बार आया है।

इस श्लोक में उपमा एवं पर्याय अलङ्कार तथा शार्दूलविक्रीडित छन्द है। छन्द का लक्षण—

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूल विक्रीडितम् ॥१०॥

**विपर्यस्तमिति—**

**अन्वयः**—महारम्भरचनम्, सौधम्, (महारम्भरचनम्), कुलम्, इव, विपर्यस्तम्; सरः, सुहृदाम्, नाशेन, साधोः, हृदयम्, इव, शुष्कम्; वृक्षाः, विगुणनृपयोगात्, नयाः, इव, फलैः, हीनाः; भूमिः, कुनीतैः, अविदुषः, मतिः, इव, तृणैः, छन्नाः, (दृश्यते) ॥११॥

**शब्दार्थः**—महारम्भरचनम् = महान् प्रयास से बना हुआ, सौधम् = महल, (महारम्भरचनम् = महान् धर्म आदि पुरुषार्थवाले), कुलम् = कुल के, इव = समान, विपर्यस्तम् = अस्त-व्यस्त हो गया है; सरः = जलाशय, सुहृदाम् = मित्रों के, नाशेन = विनाश से, साधोः = सज्जन (व्यक्ति) के, हृदयम् = हृदय के, इव = समान, शुष्कम् = सूख गया है; वृक्षाः = वृक्ष, विगुणनृपयोगात् = गुणहीन राजा के संसर्ग से, नयाः = नीतियों के, इव = समान, फलैः = फलों से, हीनाः = हीन हो गये हैं; भूमिः = भूमि,

अपि च—

क्षताङ्गानां तीक्ष्णैः परशुभिरुग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ १२ ॥

एते च तपस्विनः

अन्तःशरीरपरिशोषमुदग्रयन्तः
कीटक्षतिस्रुतिभिरस्रमिवोद्वमन्तः ।

---

कुनीतैः = खराब नीतियों से, अविदुषः = अल्पज्ञ की, मतिः = बुद्धि के, इव = समान, तृणैः = तृणों से, छन्नाः = आच्छन्न हो गयी है ॥११॥

**टीका**—विपर्यस्तमिति । महारम्भरचनम्—महता = विपुलेन आरम्भेण—आरभ्यन्ते कार्याणि अनेनेति आरम्भः = उद्योगः तेन रचना = निर्माणम् यस्य तादृशम्, सौधम् = राजसदनम् ('सौधोऽस्त्री राजसदनम्' इत्यमरः), (महारम्भरचनम्—महारम्भरचना = धर्मादिक्रिया यस्य तादृशम्), कुलमिव = वंश इव, विपर्यस्तम् = संस्काराद्यभावाद् व्यस्तम् । विपर्यस्तमित्यस्य विध्वस्तमिति व्याख्या न सङ्गच्छते नन्दोच्छेदकालादेकस्यापि वर्षस्यापगमाभावात्—"अद्य दशमो मासस्तातस्योपरतस्य" इति तृतीयाङ्के मलयकेतुवचनादिति । सरः = एषः जलाशयः, क्रीडासरः इत्यर्थः, सुहृदाम् = मित्राणाम्, नाशेन = क्षयेण, साधोः = सज्जनस्य, ममेति गूढोऽभिप्रायः, हृदयम् = चेतः ('चित्तन्तु चेतो हृदयम्' इत्यमरः), इव = यथा, शुष्कम् = नीरसं जातम् । वृक्षाः = तरवः, विगुणनृपयोगात्—विगुणस्य = गुणहीनस्य नृपस्य = राज्ञः योगात् = संसर्गात्, नयाः = नीतयः, इव = यथा, फलैः = परिणामैः, हीनाः = विरहिताः जाताः । भूमिः = उद्यानधरातलमित्यर्थः, कुनीतैः = दुर्नयैः कपटोपदेशैः, अविदुषः = अपण्डितस्य, मतिः = बुद्धिः, इव = यथा, तृणैः = घासैः ('शष्पं बालतृणं घासः' इत्यमरः) अविदुषः पक्षे—तृणैः = अविचारै इत्यर्थः, छन्ना = आवृता, दृश्यते इति शेषः ॥११॥

**टिप्पणी**—**इदम्**—जिनका ११ वें श्लोक की प्रथम दो पंक्तियों में वर्णन है उन्हीं का निर्देश 'इदम्' पद से किया गया है ।

**शुष्कम्**—

**विपर्यस्तम्**—वि + परि + √अस् + क्त + विभक्त्यादिकार्यम् ।

**शुष्कः**—√शुष् + क्त तस्य कः + विभक्तिकार्यम् ।

**सुहृदाम्**—नन्द और कौलूतादि की ओर संकेत है ।

**विगुणनृपयोगात्**—गुणहीन मलयकेतु के संसर्ग से—
यह शाङ्केति भाव है ।

**कुनीतैः**—भागुरायण आदि की कपटनीतियों से ।

**अविदुषः**—मलयकेतु की ओर यह पद संकेत करता है ।

और भी—

तीक्ष्ण धारवाले कठोर कुठारों से कटे हुए अङ्गवाले वृक्षों की पीड़ा से, कबूतरों के निरन्तर करुण कूजनों के माध्यम से, विलाप (सी) करती हुई डालियों के घाव को सर्प, परिचित (वृक्षों) के कष्ट की करुणा से उसांसे भरते हुए, अपनी केंचुलों के टुकड़ों से (मानो) मरहमपट्टी कर रहे हैं ॥१२॥

और ये बेचारे—

(सींचने के बिना अपने) आन्तरिक शरीर की शुष्कता को बढ़ाते हुए कीटों के काटने से (निकलते हुए रस के) प्रवाहों से अश्रु बहाते हुए से, (पत्तों के अभाव में)

---

छन्नाः—√छद् + क्त तस्य नः + विभक्त्यादिकार्यम् ।

इस श्लोक में मालोपमा अलङ्कार तथा शिखरिणी छन्द है । छन्द का लक्षण—

रसै रुद्रैश्छिन्ना यमनसभलागाः शिखरिणी ॥११॥

**क्षताङ्गानामिति**—

**अन्वयः**—तीक्ष्णैः, उदग्रैः, परशुभिः, क्षताङ्गानाम्, क्षितिरुहाम्, रुजा, अविरत-कपोतोपरुदितैः, कूजन्तीनाम्, शाखानाम्, व्रणम्, फणिनः, परिचितपरिक्लेशकृपया, श्वसन्तः, स्वनिर्मोकच्छेदैः, निबध्नन्ति, इव ॥१२॥

**शब्दार्थः**—तीक्ष्णैः = तीक्ष्ण धारवाले, उदग्रैः = कठोर, परशुभिः = कुठारों से, क्षताङ्गानाम् = कटे हुए अङ्गवाले, क्षितिरुहाम् = वृक्षों को, रुजा = पीडा से, अविरत-कपोतोपरुदितैः = कबूतरों के निरन्तर करुण कूजनों के माध्यम से, कूजन्तीनाम् = विलाप (सी) करती हुई, शाखानाम् = डालियों के, व्रणम् = घाव को, फणिनः = सर्प, परिचितपरिक्लेशकृपया = परिचित (वृक्षों) के कष्ट की करुणा से, श्वसन्तः = उसांसे भरते हुए, स्वनिर्मोकच्छेदैः = अपनी केंचुलों के टुकड़ों से, निबध्नन्ति इव = (मानो) मरहमपट्टी कर रहे हैं ॥१२॥

**टीका**—क्षताङ्गानामिति । तीक्ष्णैः = सितधारैः, उदग्रैः = कठोरैः, परशुभिः = कुठारैः, ('द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः' इत्यमरः) क्षताङ्गानाम्—क्षतानि = छिन्नानि अङ्गानि = अवयवाः येषां तादृशानाम्, रुजा = क्लेशेन, अविरतकपोतोप-रुदितैः—अविरतम् = निरन्तरम् कपोतानाम् = पारावतानाम् ('पारावतः कलरवः कपोतोऽथ शशादनः' इत्यमरः), उपरुदितानि = प्रभूणामभावे करुणक्रन्दनानि तैः, कूजन्तीनाम् = शब्दायमानानाम्, शाखानाम् = लतानाम् ('शाखालते' इत्यमरः), व्रणम् = क्षतम्, फणिनः = सर्पाः, परिचितपरिक्लेशकृपया—परिचितानाम् = सहवासिनाम् वृक्षाणामित्यर्थः; परिक्लेशेन या कृपा = करुणा तया, श्वसन्तः = दीर्घनिःश्वासं त्यजन्तः, स्वनिर्मोकच्छेदैः—स्वस्य = आत्मनः निर्मोकस्य = कञ्चुकस्य ('समौकञ्चुकनिर्मोकौ' इत्यमरः) छेदैः = खण्डैः, निबध्नन्तीव = क्षतस्यपूरणार्थमावेष्टयन्तीवेत्युत्प्रेक्षा ॥१२॥

**टिप्पणी**—इस श्लोक में उत्प्रेक्षा अलङ्कार तथा शिखरिणी छन्द है । छन्द का लक्षण—

रसैरुद्रैश्छिन्ना यमनसभलागाः शिखरिणी ॥१२॥

छायावियोगमलिना व्यसने निमग्ना
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १३ ॥

यावदस्मिन्विषमदशापरिणामसुलभे भिन्नशिलातले मुहूर्तमुपविशामि । ( उपविश्याकर्ण्य च ) अये किमयमाकस्मिकः पटुपटहशङ्खमिश्रो नान्दीनादः श्रूयते । य एषः—

प्रमृद्गन्छ्रोतॄणां श्रुतिपथमसारं गुरुतया
बहुत्वात्प्रासादै सपदि परिपीतोज्झित इव ।
असौ नान्दीनादः पटुपटहशङ्खध्वनियुतो
दिशां द्रष्टुं दैर्घ्यं प्रसरति सकौतूहल इव ॥ १४ ॥

---

अन्तःशरीरेति—

अन्वयः—(तपस्विनः), अन्तःशरीरपरिशोषम् , उदग्रयन्तः, कीटक्षतिस्रुतिभिः, अस्रम् , उद्वमन्तः, इव; छायावियोगमलिनाः, व्यसने, निमग्नाः, वृक्षाः, श्मशानम् , उपगन्तुम् , प्रवृत्ताः, इव, (दृश्यन्ते) ॥१३॥

शब्दार्थः—(तपस्विनः = बेचारे), अन्तःशरीरपरिशोषम् = आन्तरिक शरीर की शुष्कता को, उदग्रयन्तः = बढ़ाते हुए, कीटक्षतिस्रुतिभिः = कीटों के काट देने से (निकलते हुए रस के) प्रवाहों से, अस्रम् = अश्रु को, उद्वमन्तः = बहाते हुए, इव = से; छायावियोगमलिनाः = (पत्तों के अभाव में) छाया के न रहने से मलिन, व्यसने = दुःख में, निमग्नाः = डूबे हुए, वृक्षाः = वृक्ष, श्मशानम् = श्मशान को, उपगन्तुम् = जाने के लिए, प्रवृत्ताः = तत्पर, इव = से, दृश्यन्ते = दिखलाई पड़ रहे हैं ॥१३॥

टीका—अन्तःशरीरेति । (तपस्विनः = वराकाः), जलसेकाभावत् , अन्तःशरीरपरिशोषम्—अन्तःशरीरस्य = शरीराभ्यन्तरस्य परिशोषम् = शुष्कताम् , उदग्रयन्तः = वर्धयन्तः, कीटक्षतिस्रुतिभिः—कीटैः = क्षुद्रजन्तुभिः कृता याः क्षतयः = छिद्राणि ताभ्यः याः स्रुतयः = रसक्षरणानि ताभिः करणैः, अस्रम् = अश्रु ('नेत्राम्बु रोदनं चास्रमश्रु च' इत्यमरः), उद्वमन्तः = निःसारयन्तः, इवेत्युत्प्रेक्षा; छायावियोगमलिनाः—छायायाः = अनातपस्य ('छाया अनातपः' इत्यमरः) वियोगेन = विरहेण निष्पर्णतयेत्यर्थः मलिनाः = अपगतकान्तयः, व्यसने = दुःखे, निमग्नाः = पतिताः, वृक्षाः = एते तरवः, श्मशानम् = पितृवनम् ('श्मशानं स्यात्पितृवनम्' इत्यमरः), उपगन्तुम् = अभियातुम् , प्रवृत्ताः इव = तत्पराः इव, दृश्यन्ते इति क्रियाशेषः । नन्दानां विरहे तेषां बन्धव इव तत्रैव श्मशाने गन्तुं प्रवृत्ताः सन्ति यत्र ते दग्धाः इत्यभिप्रायः ॥१३॥

टिप्पणी—अन्तःशरीपरिरशोषम्—सुरक्षा के बिना लोगों ने उद्यान के वृक्षों की डालियों को काटना प्रारम्भ कर दिया है । अतः सूर्य की किरणें सीधे उन पर पड़ रही हैं । यही कारण है कि वे भीतर ही भीतर सूख रहे हैं ।

उदग्रयन्तः—उदग्र + णिच् + शतृ + विभक्तिकार्यम् ।

श्मशानमुपगन्तुमिव—कवि ने उत्प्रेक्षा की है कि इन वृक्षों को नन्द बहुत प्रिय

छाया के न रहने से मलिन, दुःख में डूबे हुए वृक्ष श्मशान को जाने के लिए तत्पर से दिखलाई पड़ रहे हैं (अर्थात् नन्दों के वियोग में विनष्ट होना चाहते हैं) ॥१३॥

जब तक (हमारी) बुरी अवस्था के परिणाम में (भी) आसानी से उपलब्ध इस टूटी शिला के खण्ड पर क्षण भर बैठता हूँ। (बैठकर और सुनकर) अरे, इस समय एकाएक अच्छी तरह बजनेवाले नगाड़े और शंख की ध्वनि से मिश्रित माङ्गलिक गीतों की ध्वनि क्यों सुनाई पड़ रही है ?

जो यह—

सुननेवालों के संकुचित (सँकरे) कान के छिद्र को महान् होने के कारण पीडित करता हुआ; बहुत-से राजमहलों के द्वारा शीघ्र ही पीकर (पुनः) उगला हुआ-सा, सुन्दर नगाड़े और शङ्ख की ध्वनि से युक्त, यह माङ्गलिक गीतों की ध्वनि उत्कण्ठित (हुए) के समान दिशाओं की विशालता को (मानो) देखने के लिए फैल रही है ॥१४॥

---

थे। उनके विरह में ये रो रहे हैं। भीतर ही भीतर अफसोस से सूख रहे हैं। अब प्रतीत होता है कि वे नन्दों के श्मशान में जाने के लिए भी तैयार हैं।

इस श्लोक में उत्प्रेक्षा अलङ्कार तथा वसन्ततिलका छन्द है। छन्द का लक्षण—

उक्ता वसन्ततिलका तभजा जगौ गः ॥१३॥

**शब्दार्थः**—विषमदशापरिणामसुलभे = (हमारी) बुरी अवस्था के परिणाम में (भी) आसानी से उपलब्ध, भिन्नशिलातले = टूटी शिला के खण्ड पर। आकस्मिकः = एकाएक होनेवाला, पटुपटहशंखमिश्रः = अच्छी तरह बजनेवाले नगाड़े और शंख की ध्वनि से मिश्रित, नान्दीनादः = माङ्गलिक गीत की ध्वनि ॥

**टीका**—विषमदशापरिणामसुलभे = विषमा = विपरीता या दशा = अवस्था तस्याः परिणामः = परिणतिः तस्मिन् सुलभे = सरलतयोपलब्धे; भिन्नशिलातले—भिन्नम् = स्फुटितम् च तत् शिलातलम् = शिलाखण्डः तस्मिन्। आकस्मिकः = अकस्मादुत्पन्नः, पटुपटहशंखमिश्रः—पटुः = चातुर्यपूर्णपटहशंखशब्दमिलितः, नान्दीनादः = माङ्गलिकस्य गीतस्य ध्वनिः ॥

**प्रमृद्नन्निति**—

**अन्वयः**—श्रोतॄणाम्, असारम्, श्रुतिपथम्, गुरुतया, प्रमृद्नन्; बहुत्वात्, प्रासादैः, सपदि, परिपीतोज्झितः, इव; पटुपटहशङ्खध्वनियुतः, असौ, नान्दीनादः, सकौतूहलः, इव, दिशाम्, दैर्घ्यम्, द्रष्टुम्, प्रसरति ॥१४॥

**शब्दार्थः**—श्रोतॄणाम् = सुननेवालों के, असारम् = संकुचित, श्रुतिपथम् = कान के छिद्र को, गुरुतया = महान् होने के कारण, प्रमृद्नन् = पीडित करता हुआ; बहुत्वात् = बहुत होने के कारण (अर्थात् बहुत-से), प्रासादैः = राजमहलों के द्वारा, सपदि = शीघ्र ही, परिपीतोज्झितः = पीकर उगला हुआ, इव = सा, पटुपटहशङ्खध्वनियुतः = सुन्दर नगाड़े और शङ्ख की ध्वनि से युक्त, असौ = यह, नान्दीनादः = माङ्गलिक गीतों की ध्वनि, सकौतूहलः = उत्कण्ठित के, इव = समान, दिशाम् = दिशाओं

( विचिन्त्य ) आः ज्ञातम् । एष हि मलयकेतुसंयमनसंजातो राजकुलस्य ( इत्यर्द्धोक्ते सासूयम् ) मौर्यकुलस्याधिकपरितोषं पिशुनयति ( सबाष्पम् ) कष्टं भोः कष्टम् ।

श्रावितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः ।
अनुभावयितुं मन्ये यत्नः संप्रति मां विधेः ॥ १५ ॥

---

की, दैर्घ्यम् = विशालता को, द्रष्टुम् = देखने के लिए, प्रसरति = फैल रहा है ॥१४॥

टीका—प्रमृद्‌नन्निति । श्रोतॄणाम् = आकर्णयितॄणाम्, असारम्—अविद्यमानः सारः = प्रसारः विस्तार इति यावत् यस्य तम्, संकुचितमित्यर्थः, श्रुतिपथम् = श्रवणविवरम्, गुरुतया = दीर्घतया, प्रमृद्‌नन् = पीडयन्; यथा स्वल्पे छिद्रे स्थूलं वस्तु प्रविशत् तत्पीडयति तद्वदित्यर्थः; बहुत्वात् = आधिक्यात्, प्रासादैः = राजभवनैः, सपदि = झटिति, परिपीतोज्झित इव = पूर्वं परिपीतः = निगीर्णः पश्चात् उज्झितः = परित्यक्तः इव निःसारितः = इवेत्यर्थः; पटुः = प्रवीणः सुन्दरो वा यः पटहशङ्खयोः = भेरीशङ्खयोः ध्वनयः = निनादाः तै युक्तः = मिश्रितः; असौ = एषः अनुभूयमानः, नान्दीनादः = माङ्गलिकगीत ध्वनिः, सकौतूहलः इव = उत्कण्ठायुक्तः इव, दिशाम् = काष्ठानाम् ('दिशस्तु ककुभः काष्ठाः' इत्यमरः), दैर्घ्यम् = दीर्घताम्, द्रष्टुम् = अवलोकयितुम्, प्रसरति = चतुर्दिक्षु गच्छति । अनेनोल्लासस्य ध्वनेश्च महानता सूचिता ॥१४॥

**टिप्पणी—प्रमृद्‌नन् श्रोतॄणाम्**—संकुचित छिद्र में मोटी वस्तु डालने से तकलीफ होती है । कान के छिद्र सँकरे हैं । ध्वनि विशाल है । अतः संकुचित कर्णछिद्रवाले श्रोताओं को पीड़ा का अनुभव हो रहा है ।

**परिपीतोज्झित इव**—थोड़ा जल पीकर जब व्यक्ति वमन करता है तो वही जल दूनी मात्रा में बाहर निकलता है । ठीक इसी प्रकार बहुत-से महलों ने मिलकर इस ध्वनि को पी लिया । किन्तु वे इसे पचा न सके । अतः प्रतिध्वनि के बहाने से मानो निकाल दिया । प्रतिध्वनि सर्वदा स्वाभाविक शब्द से कई गुना हुआ करती है ।

**दिशांदैर्घ्यम्**—इससे ध्वनि की दिगन्तव्यापकता सूचित होती है ।

इस श्लोक में उत्प्रेक्षा अलङ्कार तथा शिखरिणी छन्द है । छन्द का लक्षण—

रसै रुद्रैश्छिन्ना यमन सभलागाः शिखरिणी ॥१४॥

**शब्दार्थः**—मलयकेतुसंयमनसंजातः = मलयकेतु के पकड़े जाने से उत्पन्न, सासूयम् = ईर्ष्या के साथ, अधिकपरितोषम् = अत्यधिक प्रसन्नता को, पिशुनयति = सूचित कर रहा है ॥

**टीका**—मलयकेतुसंयमनसञ्जातः—मलयकेतोः = आक्रमणकारिणः पर्वतकपुत्रस्य संयमनात् = बन्धनात् ग्रहणादित्यर्थः, सञ्जातः = उत्पन्नः; सासूयम्—असूयया = ईर्ष्यया सहितं सासूयम् = सेर्ष्यम्; अधिकपरितोषम् = महतीं प्रसन्नताम्; पिशुनयति =

( सोचकर ) अच्छा, समझ गया। निश्चय ही यह ( नान्दीनाद ) मलयकेतु पकड़े जाने से उत्पन्न राजकुल की (ऐसा आधा ही कहने पर ईर्ष्यापूर्वक) मौर्यकुल की अत्यधिक प्रसन्नता को सूचित कर रहा है। (आँखों में आँसू भरकर) अरे कष्ट है, (बड़ा) कष्ट है।

( दैव के द्वारा ) शत्रु ( चन्द्रगुप्त ) की राजलक्ष्मी ( की कथा ) को सुनाया गया हूँ, (और यहाँ) लाकर दिखलाया गया भी हूँ। इस समय भाग्य का मुझे (इस राजलक्ष्मी को) अनुभव कराने का प्रयत्न ( है ) ॥१५॥

---

सूचयति ॥

**टिप्पणी—राजकुलस्य सासूयम्**—राक्षस ने पहले एकाएक राजकुल कह दिया। किन्तु उसे यह पसन्द नहीं है। अतः ईर्ष्यापूर्वक फिर मौर्यकुल कह रहा है। राक्षस के द्वारा मान्यताप्राप्त एक ही राजकुल था—नन्द का। संयोग से वह अब विनष्ट हो चुका है।

**श्रावित इति—**

**अन्वयः**—(दैवेन), शत्रोः, श्रियम्, श्रावितः, अस्मि; अभिनीय, दर्शितः, च, अस्मि: (अहम्), मन्ये, सम्प्रति, विधेः, माम्, अनुभावितुम्, यत्नः, (अस्ति) ॥१५॥

**शब्दार्थः**—(दैवेन = दैव के द्वारा), शत्रोः = शत्रु (चन्द्रगुप्त) की, श्रियम् = राजलक्ष्मी (की कथा) को, श्रावितः = सुनाया गया, अस्मि = हूँ; अभिनीय = (यहाँ) लाकर, दर्शितः = दिखलाया गया, च = भी, अस्मि = हूँ; (अहम् = मैं), मन्ये = समझता हूँ, सम्प्रति = इस समय, विधेः = भाग्य का, माम् = मुझे, अनुभावितुम् = (इस राजलक्ष्मी को) अनुभव कराने का, यत्नः = प्रयत्न, (अस्ति = है) ॥१५॥

**टीका—श्रावित इति।** (दैवेन = विधिना), शत्रोः = अरेः चन्द्रगुप्तस्येत्यर्थः, श्रियम् = राजलक्ष्मीम्, तत्सम्बन्धिनीं कथामित्यर्थः, श्रावितः = आकर्णितः, अस्मि; अभिनीय = समीपमानीय, दर्शितः = साक्षात्कारितः अस्मीतिशेषः; मन्ये = उत्प्रेक्षे, अहमिति शेषः, सम्प्रति = अधुना, विधेः = भाग्यस्य, माम् = राक्षसमित्यर्थः, अनुभावितुम् = प्रापयितुम्, शत्रुलक्ष्मीमिति शेषः, यत्नः = प्रयासः, अस्तीति क्रियाशेषः। चन्दनदासं विपत्तेः विमोक्षणार्थं विधिबलादिदं गले आपतितमिति भावः ॥१५॥

**टिप्पणी—श्रावितोऽस्मि**—पहले विराधगुप्त तथा करभक आदि के द्वारा सुना था अब देख रहा हूँ तथा चन्दनदास को कैद से छुड़ाने के लिए शत्रु की लक्ष्मी का अनुभव भी करना पड़ेगा।

इस श्लोक में उत्प्रेक्षा अलङ्कार तथा अनुष्टुप् छन्द है। छन्द का लक्षण—

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥१५॥

पुरु०—आसीनोऽयम्। यावदार्यचाणक्यादेशं संपादयामि। (आसीणो अअं। जाव अज्जचाणक्कदिसं संपादेमि।)

(राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठमुद्बध्नाति)

राक्ष०—(विलोक्य) अये कथमात्मानमुद्बध्नात्ययम्। अहमिव दुःखितस्तपस्वी। भवतु पृच्छाम्येनम्। (उपसृत्य) भद्र, किमिदमनुष्ठीयते?

पुरु०—(सबाष्पम्) आर्य, यत्प्रियवयस्यविनाशदुःखितोऽस्मादृशो मन्दभाग्योऽनुतिष्ठति। (अज्ज जं पिअवअस्सविणासदुःखिदो अह्मारिसो मन्दभग्गोणुचिट्ठदि।)

राक्ष०—(आत्मगतम्) प्रथममेव मया ज्ञातं नूनमहमिवार्तस्तपस्वीति। (प्रकाशम्) हे व्यसनब्रह्मचारिन्यदि न गुह्यं नातिभारिकं वा ततः श्रोतुमिच्छामि।

पुरु०—आर्य, न रहस्यं नातिगुरुकं किं तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्तुम्। (अज्ज ण रहस्सं णादिगुरुअं किंदु ण सक्णोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमेत्तं वि मरणस्स कालहरणं कादुं।)

राक्ष०—(निःश्वस्यात्मगतम्) कष्टमेते सुहृद्व्यसनेषु परवदुदासीनाः प्रत्यादिश्यामहे वयममेन। (प्रकाशम्) भद्र, यदि न रहस्यं नातिगुरु वा तच्छ्रोतुमिच्छामि।

पुरु०—अहो निर्बन्ध आर्यस्य। का गतिः। निवेदयामि। अस्ति तावदत्र नगरे मणिकारश्रेष्ठी विष्णुदासोनाम। (अहो णिब्बन्धो अज्जस्स। का गई। णिवेदेमि। अत्थि दाव एत्थ णअरे मणिआरसेट्ठी विह्णुदासो णाम।)

राक्ष०—(आत्मगतम्) अस्ति विष्णुदासश्चन्दनदासस्य परमसुहृत्। (प्रकाशम्) किं तस्य?

---

शब्दार्थः—आसीनः = बैठ गया। आर्यचाणक्यादेशम् = आर्य चाणक्य के आदेश को। रज्जुपाशेन = रस्सी के फन्दे से; कण्ठम् = गले को। तपस्वी = बेचारा। प्रियवयस्यविनाशदुःखितः = (अपने) प्रिय मित्र के विनाश से दुःखी, अस्मादृशः = हमारे जैसा, मन्दभाग्यः = अभागा॥

टीका—आसीनः = कृतासन परिग्रहः, उपविष्टः इत्यर्थः। आर्यचाणक्यादेशम्—आर्यचाणक्यस्य = पूज्यकौटिल्यस्य आदेशम् = आज्ञाम्। रज्जुपाशेन = बन्धनदाम्ना, कण्ठम् = गलप्रदेशम्। तपस्वी = वराकः। प्रियवयस्यविनाशदुःखितः—प्रियवयस्यस्य = प्रियमित्रस्य विनाशेन = मृत्युना दुःखितः = अनुभूतकष्टः, अस्मादृशः = मत्सदृशः, मन्दभाग्यः = क्षीणभाग्यः॥

शब्दार्थः—आर्तः = दुःखी। हे व्यसनब्रह्मचारिन् = हे दुःख भोगने में मेरे जैसे मित्र, गुह्यम् = गुप्त, अतिभारिकम् = हृदयविदारक, हृदय के लिए असह्य। प्रियवयस्यविनाशदुःखितहृदयः = प्रिय मित्र के विनाश के कारण दुःखित हृदयवाला। कालहरणम् = समय-यापन। परवदुदासीनाः = अपरिचित के समान उदासीन, प्रत्यादिश्यामहे = तिरस्कृत कर दिये गये॥

टीका—आर्तः = पीडितः। हे व्यसनब्रह्मचारिन्—व्यसने = दुःखे ब्रह्मचारी =

पुरुष—यह ( राक्षस ) बैठ गया। तो आर्य चाणक्य के आदेश को सम्पन्न करता हूँ।

(राक्षस को न देखता हुआ-सा उसके सामने रस्सी के फन्दे से (अपने) गले को बाँधता है)

राक्षस—(देखकर) अरे, क्या यह अपने आपको बाँध रहा है? बेचारा हमारे समान ही दुःखी है। अच्छा, इससे पूछता हूँ। (पास में जाकर) भले मानुष, यह क्या किया जा रहा है?

पुरुष—(आँखों में आँसू भरकर) आर्य, (अपने) प्रिय मित्र के विनाश से दुःखी हमारे जैसा अभागा जो करता है (अर्थात् मित्र के लिए प्राण त्याग रहा हूँ)।

राक्षस—( अपने आप ) पहले ही मैं जान गया था—निश्चय ही ( यह ) बेचारा हमारे ही समान दुःखी है। (प्रकट रूप में) हे दुःख भोगने में मेरे जैसे मित्र, यदि (यह) गुप्त अथवा हृदयविदारक (बात) नहीं है तो (इसे) सुनना चाहता हूँ।

पुरुष—आर्य, न रहस्य है, न हृदयविदारक है। किन्तु (अपने) प्रियमित्र के विनाश के कारण दुःखित हृदयवाला (मैं) प्राण त्यागने में इतना भी विलम्ब नहीं कर सकता हूँ।

राक्षस—(लम्बी साँस लेकर अपने आप) दुःख है (कि) इस व्यक्ति के द्वारा, मित्र (चन्दनदास) की विपत्तियों के विषय में अपरिचित के समान उदासीन यह हम तिरस्कृत कर दिये गये हैं (अर्थात् लज्जित कर दिये गये हैं)। (प्रकट रूप में) भद्र, यदि गुप्त अभाव हृदयविदारक (बात) नहीं है तो सुनना चाहता हूँ।

पुरुष—आर्य का आग्रह आश्चर्यजनक है। क्या उपाय है? बतलाता हूँ। इस नगर में विष्णुदास नामक जौहरी है।

राक्षस—(अपने आप) विष्णुदास चन्दनदास का घनिष्ठ मित्र है। (प्रकट रूप में) उसका क्या (हुआ)?

---

अन्तेवासी तत्सम्बुद्धौ हे व्यसनब्रह्मचारिन् = हे समान व्यसन, गुह्यम् = गोपनीयम्, अतिभारिकम् = हृदयविदारकमित्यर्थः, असह्यमिति भावः। प्रियवयस्यविनाशदुःखित-हृदयः—प्रियवयस्यस्य = प्रियमित्रस्य विनाशेन = मृत्युना दुःखितम् = पीडितम् हृदयम् = चेतः यस्य तादृशः। कालहरणम्—समयातिपातम्। परवदुदासीनाः = परवत् = अन्यवत् उदासीनाः = त्यक्तोद्योगाः, प्रत्यादिश्यामहे = तिरस्क्रियामहे ॥

**टिप्पणी—गुह्यम्**—√गुह् + क्यप् कर्मणि + विभक्तिकार्यम्।

**अतिभारिकम्**—अतिभार + ठन् तत्स्थाने इकादेशः + विभक्त्यादिकार्यम्।

**प्रत्यादिश्यामहे**—राक्षस अब तक समझ रहा था कि मैं ही सबसे बड़ा मित्रवत्सल हूँ। किन्तु आज उसका एक ऐसे मित्रवत्सल से मुकाबला हो गया है जिसके सामने राक्षस अपने आपको लज्जित समझ रहा है ॥

पुरु०—स मम प्रियवयस्यः ( सो मम पिअवअस्सो )—

राक्ष०—( सहर्षमात्मगतम् ) अये प्रियवयस्य इत्याह। अत्यन्तसन्निकृष्टः संबंधः। हन्त ज्ञास्यति चन्दनदासस्य वृत्तान्तम्।

पुरु०—संप्रति दीनजनदत्ताभरणादिविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः। अहमपि यावत्तस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्यव्यापादयितुमिदं जीर्णोद्यानमागतः। ( संपदं दीणजणदिण्णाभरणादिविहवो जलणं पवेसिदुकामो णअरादो णिक्कन्तो। अहं वि जाव तस्स अमुणिदव्वं ण सुणोमि ताव अत्ताणं उब्बन्धिअ वावादइदुं इमं जिण्णुज्जाणं आअदो। )

राक्ष०—भद्र, अग्निप्रवेशे सुहृदस्ते को हेतुः ?

**किमौषधपथातिगैरुपहतो महाव्याधिभिः**

पुरु०—नहि नहि। ( णाहि णाहि। )

राक्ष०—**किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा।**

पुरु०—आर्य, शान्तं पापं शान्तं पापम्। चन्द्रगुप्तस्य जनपदे न नृशंसा प्रतिपत्तिः ( अज्ज सन्तं पावं सन्तं पावं। चन्द्रउत्तस्स जणवदे ण णिसंसा पडिवत्ती )

राक्ष०—**अलभ्यमनुरक्तवान् किमयमन्यनारीजनम्**

पुरु०—( कर्णौ पिधाय ) शान्तं पापम्। अभूमिः खल्वेषोऽविनयस्य। ( सन्तं पावं। अभूमी क्खु ऐसो अविणअस्स। )

राक्ष०—**किमस्य भवतो यथा सुहृद एव नाशोऽवशः॥ १६॥**

---

**शब्दार्थः**—निर्बन्धः = आग्रह, हठ। गतिः = उपाय। परमसुहृत् = परममित्र। अत्यन्तसन्निकृष्टः = अत्यन्त घनिष्ठ। दीनजनदत्ताभरणादिविभवः = दीनजनों को आभूषण आदि सम्पत्ति देकर। अश्रोतव्यम् = न सुनने योग्य, समाचार को, अमङ्गल को॥

**टीका**—निर्बन्धः = आग्रहः। गतिः = उपायः। परमसुहृत् = परममित्रम्। अत्यन्तसन्निकृष्टः = अत्यन्तघनिष्ठः। दीनजनदत्ताभरणादिविभवः—दीनजनेभ्यः = दरिद्रेभ्यः दत्तः = समर्पितः आभरणादिविभवः = आभूषणादिसम्पत्तिः येन तादृशः। अश्रोतव्यम् = श्रवणानर्हम्, अमङ्गलमिति यावत्॥

**अन्वयः**—(सः), किम्, औषधपथातिगैः, महाव्याधिभिः, उपहतः; किम्, अग्निविषकल्पया, नरपतेः, क्रुधा, निरस्तः; कथय, किं नु, अलभ्यम्, नारीजनम्, अनुरक्तवान्; किम्, अस्य, भवतः, यथा, सुहृदः, एव, अवशः, नाशः॥१६॥

**शब्दार्थः**—(सः = वह), किम् = क्या, औषधपथातिगैः = औषधि के मार्ग के मार्ग का अतिक्रमण करनेवाले (अर्थात् औषधि से भी असाध्य), महाव्याधिभिः = भयङ्कर रोगों से, उपहतः = पीडित है ? किम् = क्या, अग्निविषकल्पया = अग्नि और विष के तुल्य, नरपतेः = राजा के, क्रुधा = कोप से, निरस्तः = ग्रस्त है; कथय = बतलाओ, किं नु = क्या, अलभ्यम् = दुष्प्राप्य, नारीजनम् = स्त्री के प्रति, अनुरक्तवान् =

**पुरुष**—वह मेरा प्रिय मित्र—

**राक्षस**—(प्रसन्नतापूर्वक अपने आप) अरे, (इसने विष्णुदास को) प्रिय मित्र कहा है। अत्यन्त घनिष्ठ सम्बन्ध है। अहा, चन्दनदास के समाचार को जानता होगा।

**पुरुष**—(वह विष्णुदास) दीनजनों को आभूषण आदि सम्पत्ति देकर आग में प्रवेश करने की इच्छा से सम्प्रति नगर से बाहर निकल गया है। मैं भी जब तक उसके अमङ्गल को (निधन को) नहीं सुनता तब तक अपने आपको बाँधकर मारने के लिए इस जीर्णोद्यान में आया हूँ।

**राक्षस**—भद्र, तुम्हारे मित्र के आग में प्रवेश करने का क्या कारण है ?

(वह) क्या औषधि से भी असाध्य भयङ्कर रोगों से पीड़ित है ?

**पुरुष**—नहीं-नहीं।

**राक्षस**—क्या अग्नि और विष के तुल्य राजा के कोप से ग्रस्त है ?

**पुरुष**—पाप शान्त हो, पाप शान्त हो। चन्द्रगुप्त के राज्य में निर्दय प्रयोग नहीं होता।

**राक्षस**—बतलाओ, क्या दुष्प्राप्य स्त्री के प्रति अनुरक्त था ?

**पुरुष**—(कानों को ढँक कर) पाप शान्त हो। यह (विष्णुदास इस प्रकार की) उद्दण्डता का आश्रय नहीं है।

**राक्षस**—क्या इसके (विष्णुदास के) आपके समान (किसी) मित्र का ही अप्रतिकार्य विनाश हुआ है ? ॥१६॥

---

अनुरक्त था; किम् = क्या, अस्य = इसका (विष्णुदास का), भवतः = आपके, यथा = समान, सुहृदः = मित्र का, एव = ही, अवशः = अप्रतिकार्य, नाशः = विनाश (कारण) है ? ॥१६॥

**टीका**—सः किम् औषधपथातिगैः—औषधानाम् = भेषजानाम् पन्थानम् = मार्गम् शक्तिमित्यर्थः अतिगच्छन्ति = अतीत्यवर्तन्ते ये तादृशैः, अचिकित्स्यैरित्यर्थः, महाव्याधिभिः = असाध्यैः रोगैः, उपहतः = पीडितः अस्ति ? किम् अग्निविषकल्पया—अग्निश्च विषञ्च इति अग्निविषे ताभ्यामीषदूना अग्निविषकल्पा = अग्निगरलसमाना तया, नरपतेः = राज्ञः, क्रुधा = कोपेन, निरस्तः = ग्रस्तः अस्ति, पात्रमस्तीति भावः; कथय = ब्रूहि, किं नु = किम्, अलभ्यम् = अप्राप्यम्, नारीजनम् = सुन्दरीमित्यर्थः, अनुरक्तवान् = आसक्तवान्; किम् अस्य = तवमित्रस्य विष्णुदासस्य, भवतः = तव, यथा = इव, सुहृदः = मित्रस्य, एव = हि, न विद्यते वशम् = प्रभुत्वं यत्र तादृशः अवशः = अप्रतिकार्यः, नाशः = विनाशः सञ्जात इतिशेषः। एभिः कारणैः एव कश्चिन्मृत्युं स्वेच्छया आलिङ्गतीति तात्पर्यम् ॥१६॥

**टिप्पणी**—**उपहतः**—उप + √हन् + क्त + विभक्तिकार्यम्।

**अलभ्यम्**—अ + √लभ् + ल्यप् + विभक्तिकार्यम्।

इस श्लोक में रूपक अलङ्कार तथा पृथ्वी छन्द है। छन्द का लक्षण—

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥१६॥

पुरु०—आर्य, अथ किम् ? ( अज्ज अह इं ? )

राक्ष०—( सावेगमात्मगतम् ) चन्दनदासस्य प्रियसुहृदिति तद्विनाशो हुतभुक्प्रवेशहेतुरिति यत्सत्यं चलितमेवास्ते युक्तस्नेहपक्षपाताद्धृदयम् ( प्रकाशम् ) तद्विनाशं च प्रियसुहृद्वत्सलतया मर्तव्ये व्यवसितस्य सुचरितं च विस्तरेण श्रोतुमिच्छामि ।

पुरु०—आर्य, अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम् । ( अज्ज अदो अवरं ण सक्कोमि मन्दभाग्गो मरणस्स विग्घमुप्पादेदुं । )

राक्ष०—भद्र, श्रवणीयां कथां कथय ।

पुरु०—का गतिः ? किं कर्तव्यम् । एष खलु निवेदयामि । शृणोत्वार्यः । ( का गई । किं कादव्वम् । एसो क्खु णिवेदेमि । सुणोदु अज्जो । )

राक्ष०—भद्र, अवहितोऽस्मि ।

पुरु०—अस्ति इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम । ( अत्थि एत्थ णअरे मणिआरसेट्ठी चन्दणदासो णाम ।

राक्ष०—( सविषादमात्मगतम् ) एतत्तदपावृतमस्मच्छोकदीक्षाद्वारं दैवेन । हृदय स्थिरीभव किमपि ते कष्टतरमाकर्णनीयमस्ति । ( प्रकाशम् ) भद्र, श्रूयते मित्रवत्सलः साधुः । किं तस्य ?

पुरु०—स एतस्य विष्णुदासस्य प्रियवयस्यो भवति । सो एदस्स विह्णुदासस्स पिअवअस्सो होदि । )

राक्ष०—( स्वगतम् ) सोयमभ्यर्णः शोकवज्रपातो हृदयस्य ।

पुरु०—ततो विष्णुदासेन वयस्यस्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः । ( तदो विह्णुदासेण वअस्ससिणेहसरिसं अज्ज विण्णविदो चन्दउत्तो । )

---

**शब्दार्थः**—हुतभुक्प्रवेशहेतुः—अग्नि में प्रवेश करने का कारण है । युक्तस्नेहपक्षपातात् = उचित स्नेह की अनुभूति होने के कारण, प्रियसुहृद्वत्सलतया = प्रियमित्र के प्रति अत्यधिक प्रेम करने के कारण । मर्तव्ये = मरने के विषय में, व्यवसितस्य = तत्पर ॥

**टीका**—हुतभुक्प्रवेशहेतुः—हुतभुजि = वह्नौ प्रवेशस्य = गमनस्य हेतुः = कारणम् । युक्तस्नेह पक्षपातात्—युक्ते = समीचीने योग्ये इत्यर्थः, स्नेहे = प्रेम्णि पक्षपातः = अनुभूतिः तस्मात्, चन्दनदासं प्रति स्नेहाधिक्यादिति भावः; प्रियसुहृद्वत्सलतया—प्रियसुहृदि = प्रिये मित्रे, वत्सलता = स्नेहभावना तया । मर्तव्ये = मरणे, व्यवसितस्य = उद्युक्तस्य ॥

**शब्दार्थः**—अपावृतम् = खोल दिया गया है । अस्मच्छोकदीक्षाद्वारम् = हमारे शोक की दीक्षा का द्वार । स्थिरीभव = स्थिर होओ, धैर्य धारण करो । अभ्यर्णः = पास में, समीप, शोकवज्रपातः = शोकरूपी वज्र आघात । विनिमयेन = अदला-बदली, वस्तु के बदले वस्तु का लेन-देन, अमानत ॥

**टीका**—अपावृतम् = उद्घाटितम् । अस्मच्छोकदीक्षाद्वारम्—अस्माकं शोकस्य =

**पुरुष**—और क्या ? ( अर्थात् मित्र के विनाश के कारण ही वह मरना चाहता है ) ।

**राक्षस**—(घबराहट के साथ अपने आप) चन्दनदास का (वह) प्रियमित्र है । चन्दनदास का विनाश ही उसके (विष्णुदास के) आग में प्रवेश का कारण है । अतः वस्तुतः उचित स्नेह की अनुभूति होने के कारण (मेरा) हृदय छटपटा रहा है (अथवा बाहर निकल रहा है) । (प्रकट रूप में) उस (चन्दनदास) के विनाश को और प्रिय मित्र के प्रति अत्यधिक प्रेम के कारण मरने के विषय में तत्पर (विष्णुदास) के सुचरित को विस्तारपूर्वक सुनना चाहता हूँ ।

**पुरुष**—आर्य, अभागा (मैं) इसके अतिरिक्त (अपनी) मृत्यु के दूसरे विघ्न को उत्पन्न करने में समर्थ नहीं हूँ (अर्थात् अपने मरने के विषय में विलम्ब नहीं बर्दाश्त कर सकता ) ।

**राक्षस**—भद्र, सुनने योग्य कथा को कहो (अर्थात् मुख्य कथाभाग का वर्णन करो) ।

**पुरुष**—क्या उपाय है ? क्या करना चाहिए ? अच्छा अब बतलाता हूँ । आर्य सुनें ।

**राक्षस**—भले व्यक्ति, (सुनने के लिए) सावधान हूँ ।

**पुरुष**—इस नगर में चन्दनदास नामक (एक) जौहरी सेठ है ॥

**राक्षस**—( खेद के साथ अपने आप ही ) भाग्य के द्वारा हमारे शोक की दीक्षा का यह द्वार खोल दिया गया है (अर्थात् भाग्य ने हमारे लिए शोकरूपी व्रत का विधान कर दिया है) । हृदय ! धैर्य धारण करो, तुम्हें कुछ अधिक कष्टकारक (बातें) सुननी हैं । (प्रकट रूप में) भद्र, मित्रवत्सल (उस) सज्जन का (वृत्तान्त) सुन रहा हूँ । उसका क्या (हुआ) ?

**पुरुष**—वह इस विष्णुदास का प्रिय मित्र है ।

**राक्षस**—(अपने आप) यह (मेरे) हृदय के लिए शोकरूपी वज्र का आघात समीप ही है । (अर्थात् हृदय के लिए अति कष्टकारक चन्दनदास का दुःखद समाचार अब सुनाई ही पड़नेवाला है) ।

**पुरुष**—तदनन्तर आज विष्णुदास ने, मित्र के प्रेम के अनुरूप, चन्द्रगुप्त से निवेदन किया ।

---

शुचः दीक्षा = व्रतग्रहणम् तस्याः द्वारम् = प्रवेशमार्गः । स्थिरीभव = धैर्यं धारयेत्यर्थः । अभ्यर्णः = समीपवर्ती । शोकवज्रपातः—शोकः = मन्युः ('मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः) स एव वज्रम् = कुलिशम् तस्य पातः = पतनम् आघात इत्यर्थः । विनिमयेन = परिदानेन, परिवर्तनेनेतिभावः ॥

**टिप्पणी—कुटुम्बभरणपर्याप्तः**—यह अर्थ = धन की अधिकतामात्र को दिखलाने के लिए प्रयुक्त हुआ है ॥

**राक्षस०**—कथय किमिति ?

**पुरु०**—देव अस्ति मम गेहे कुटुम्बभरणपर्याप्तोऽर्थः तस्य विनिमयेन मुच्यतां प्रिय-वयस्यश्चन्दनदास इति। ( देव अत्थि मम गेहे कुटुम्बभरणपज्जत्तो अत्थो। तस्स विणि-मएण मुञ्चिज्जदु पिअवअस्सो चन्दणदासो त्ति। )

**राक्ष०**—( स्वगतम् ) साधु भो विष्णुदास साधु। अहो दर्शितो मित्रस्नेहः। कुतः ?—

पितॄन्पुत्राः पुत्रान्परवदभिहिंसन्ति पितरो
यदर्थं सौहार्दं सुहृदि च विमुञ्चन्ति सुहृदः।
प्रियं मोक्तुं तद्यो [तं यो] व्यसनमिव सद्यो व्यवसितः
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः॥ १७॥

( प्रकाशम् ) भद्र, ततस्तथाभिहितेन किं प्रतिपन्नं मौर्येण ?

**पुरु०**—आर्य, तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी विष्णुदासः न मयार्थस्य कारणेन चन्दनदासः संयमितः किन्तु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजनो बहुशो याचितेनापि न समर्पितः। तद्यदि तं समर्पयति तदस्त्यस्य मोक्षः अन्यथा प्राणहरोऽस्य दण्ड

---

**पितॄनिति**—

**अन्वयः**—यदर्थम्, पुत्राः, पितॄन्, पितरः, पुत्रान्, परवत्, अभिहिंसन्ति; (यदर्थम्), सुहृदः, सुहृदि, सौहार्दम्, च, विमुञ्चन्ति; तत्, प्रियम्, (धनम्); यः, व्यसनमिव; सद्यः, मोक्तुम्, व्यवसितः, सः, अयम्, अर्थः, वणिजः, तव, वणित्त्वे, सति, अपि, कृतार्थः, (अस्ति) ॥१७॥

**शब्दार्थः**—यदर्थम् = जिस (धन) के लिए, पुत्राः = पुत्र, पितॄन् = माता-पिता को, पितरः = माता-पिता, पुत्रान् = पुत्रों को, परवत् = शत्रु के समान, अभिहिंसन्ति = मार डालते हैं; (यदर्थम् = जिसके लिए), सुहृदः = मित्र, सुहृदि = मित्र के विषय में, सौहार्दम् = प्रेमभाव को, च = भी, विमुञ्चन्ति = परित्यक्त कर देते हैं; तत् = उसी, प्रियम् = प्रिय, (धनम् = धन को), यः = जो व्यक्ति, व्यसनमिव = पाप के समान, सद्यः = शीघ्र, मोक्तुम् = छोड़ देने के लिए, व्यवसितः = तत्पर है, सः = वही, अयम् = यह, अर्थः = धन, वणिजः = बनिया, तव = तुम्हारे लिए (अर्थात् तुम्हारे जैसे बनिया के), वणिक्त्वे = बनियापन के, सति = रहने पर, अपि = भी, कृतार्थः = सफल, (अस्ति = है) ॥१७॥

**टीका**—पितॄनिति। यदर्थम् = यस्मै धनाय निमित्तम्, पुत्राः = सुताः, पितॄन् = जननीजनकांश्च, पितरः = जनकाः, पुत्रान् = सुतान्, परवत् = शत्रुवत्, अभिहिंसन्ति = घ्नन्ति; यदर्थम्, सुहृदः = मित्राणि, सुहृदि = मित्रे, सौहार्दम् = मैत्रीम्, च = अपि, विमुञ्चन्ति = त्यजन्ति; तत् = तादृशम्, प्रियम् = अभीप्सितम्, धनमितिशेषः, सः = त्वम् विष्णुदास इत्यर्थः, व्यसनम् = पापम् ('व्यसन त्वशुभे ······ 'पापे' इतिविश्वः) इव = यथा, सद्यः = झटिति; अकृतेऽपि विचारे इत्यर्थः, मोक्तुम् = त्यक्तुम्, व्यवसितः =

**राक्षस**—बतलाओ क्या (निवेदन किया ) ?

**पुरुष**— महाराज, मेरे घर में परिवार के भरण-पोषण के लिए पर्याप्त सम्पत्ति है। अतः उस (धन) की अमानत से (अथवा उस धन को ले करके) प्रिय मित्र चन्दनदास को छोड़ दीजिये।

**राक्षस**—(अपने आप) वाह, विष्णुदास वाह। आश्चर्यजनक ढंग से मित्र-स्नेह को प्रदर्शित किया। क्योंकि—

जिस ( धन ) के लिए पुत्र माता-पिता को, माता-पिता पुत्रों को शत्रु के समान मार डालते हैं। (जिसके लिए) मित्र मित्र के विषय में प्रेम-भाव को भी परित्यक्त कर देते हैं, उसी प्रिय (धन को) जो व्यक्ति, पाप के समान, शीघ्र ही छोड़ देने के लिए तत्पर है, वही यह धन तुम्हारे जैसे वनिया के वनियापन (अर्थात् कृपणता) के रहने पर भी सफल है ॥१७॥

( प्रकट रूप में ) भद्र, उसके पश्चात् उस प्रकार से कहे गये मौर्य चन्द्रगुप्त के द्वारा क्या जवाब दिया गया ? (अर्थात् वैसा कहने पर चन्द्रगुप्त ने क्या जवाब दिया ?)।

**पुरुष**—आर्य, तदनन्तर इस प्रकार से कहे गये (अर्थात् ऐसा कहने पर) चन्द्रगुप्त ने सेठ विष्णुदास को उत्तर दिया—"मैंने धन के लिए चन्दनदास को नहीं बाँधा है। किन्तु इसके द्वारा अमात्य राक्षस का परिवार छिपाकर रखा गया है। बारम्बार माँगने पर भी (इसने) नहीं सौंपा। तो यदि उस (परिवार) को समर्पित करेगा तो इसके प्राण छूट जायेंगे, अन्यथा इसके प्राणों को हरण करनेवाला दण्ड (अर्थात् प्राणदण्ड) दिया जायगा"—

---

कृतनिश्चयः, सः = तादृशम्, अयम् = त्वया मित्रार्थं दत्तुमुद्दिष्टमित्यर्थः, अर्थः = धनम्, वणिजः = पण्यजीविनः, अतिलोलुपस्यवणिजः इत्यर्थः, तव = भवतः विष्णुदासस्येत्यर्थः, वणिक्त्वे = वणिग्भावे, वणिजः कार्पण्यभावे इत्यर्थः, सति = वर्तमाने, अपि, कृतार्थः = सफलः, धनस्य दानभोगनाशेषु दानस्य प्रथमगतित्वादित्यभिप्रायः। अस्तीति क्रिया-शेषः ॥१७॥

**टिप्पणी**—**सौहार्दम्**—सुहृदः भावः सौहार्दम्, सुहृद् + अण् उभयपदवृद्धिः + विभक्तिकार्यम्।

इस श्लोक में उपमा एवं काव्यलिङ्ग अलङ्कार तथा शिखरिणी छन्द है। छन्द का लक्षण—

रसै रुद्रैश्छिन्ना यमनसभलागाः शिखरिणी ॥१७॥

**शब्दार्थः**—प्रतिपन्नम् = जवाब दिया गया, उत्तर दिया गया। संयमितः = पकड़ा गया है, बाँधा गया है। प्रच्छादितः = छिपाकर रखा गया है, गृहजनः = परिवार, स्त्री। व्यापादयामि = विनष्ट कर दे रहा हूँ ॥

**टीका**—प्रतिपन्नम् = उत्तरितम्। संयमितः = बद्धः। प्रच्छादितः = संगोपितः, गृहजनः = स्त्री-पुत्रादिः। व्यापादयामि = विनाशयामि ॥

**टिप्पणी**—**प्रतिपन्नम्**—प्रति + $\sqrt{}$पद् + क्त + विभक्तिकार्यम्।

इति भणित्वा वध्यस्थानमानायितश्चन्दनदासः। ततो यावद्वयस्यचन्दनदासस्याश्रोतव्यं न शृणोमि तावज्ज्वलनं प्रविशामीति श्रेष्ठी विष्णुदासो नगरान्निष्क्रान्तः। अहमपि विष्णुदासस्याश्रोतव्यं यावन्न शृणोमि तावदुद्बध्यात्मानं व्यापादयामीतीदं जीर्णोद्यानमागतः। ( अज्ज तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो सेट्ठी विह्णुदासो ण मए अत्थस्स कालणेण चन्दणदासो संजमितो किंदु पच्छादिदो अणेण अमच्चरक्खसस्स घरअणो बहुसो जाचिदेण वि ण समप्पिदो। ता जदि तं समप्पेदि तदो अत्थि से मोक्खो। अण्णहा पाणहरो से दण्डो त्ति भणिअ वज्झट्ठाणं आणविदो चन्दणदासो। तदो जाव वअस्सचन्दणदासस्स असुणिदव्वं ण सुणोमि ताव जलणं पविसामित्ति सेट्ठी विह्णुदासो णअरादो णिक्कन्दो। अहं वि विह्णुदासस्स असुणिदव्वं जाव ण सुणोमि ताव उब्बन्धिअ अत्ताणं वावादेमि त्ति इदं जिण्णुज्जाणं आअदो। )

राक्ष०—भद्र, न खलु व्यापादितश्चन्दनदासः।

पुरु०—अद्य तावद्व्यापाद्यते। स खलु सांप्रतं पुनः पुनरमात्यराक्षसस्य गृहजनं याच्यते। न खलु स मित्रवत्सलतया समर्पयति। तदेतेन कारणेन न करोमि मरणस्य कालहरणम्। ( अज्ज दाव वावादीअदि। सो खु संपदं पुणो पुणो अमच्चरक्खसस्स घरअणं जाचीअदि। ण खु सो मित्तवत्सलदाए समप्पेदी ता एदिणाकालणेण ण करेमि मरणस्स कालहरणम्। )

राक्ष०—( सहर्षमात्मगतम् ) साधु वयस्य चन्दनदास, साधु।

शिवेरिव समुद्भूतं शरणागतरक्षया।
निचीयते त्वया साधो यशोऽपि सुहृदा विना॥ १८॥

( प्रकाशम् ) भद्र गच्छेदानीं शीघ्रं विष्णुदासं ज्वलनप्रवेशान्निवारय। अहमपि चन्दनदासं मरणान्मोचयामि।

पुरु०—अथ पुनः केनोपायेनार्यश्चन्दनदासं मरणान्मोचयति। ( अह उण केण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि। )

राक्ष०—( खड्गमाकृष्य ) नन्वनेन व्यवसायसुहृदा निस्त्रिंशेन। पश्य—

---

**संयमितः**—सम् + √यम् + णिच् + क्त + विभक्तिकार्यम्।

**प्राणहरः**—प्राण + √हृ + अच् कर्तरि + विभक्त्यादिकार्यम्॥

**शिवेरि वेति**—

**अन्वयः**—हे साधो, शरणागतरक्षया, समुद्भूतम्, शिवेः, (यशः), इव, त्वया, सुहृदा, बिना, अपि, यशः, निचीयते॥१८॥

**शब्दार्थः**—हे साधो = हे सज्जन, शरणागतरक्षया = शरण में आये हुए (प्राणी) की रक्षा करने के कारण, समुद्भूतम् = उत्पन्न, शिवेः = शिवि के, (यशः = यश के), इव = समान, त्वया = तुम्हारे द्वारा, सुहृदा = मित्र के, विना = बिना, अपि = भी, यशः = यश, निचीयते = सञ्चित किया जा रहा है॥१८॥

**टीका—शिवेरिवेति**—हे साधो = हे सज्जन, शरणागतरक्षया = शरणे = रक्षणे

ऐसा कहकर चन्दनदास फाँसी देने के स्थान पर लाया गया है। तत्पश्चात् जब तक इस चन्दनदास के अमाङ्गलिक समाचार को नहीं सुन रहा हूँ, तब तक आग में प्रवेश कर जाऊँ—ऐसा निश्चय करके सेठ विष्णुदास नगर से निकल गया। मैं भी विष्णुदास के अमङ्गल (मृत्यु) को जब तक नहीं सुन रहा हूँ तब तक अपने आपको बाँध कर विनष्ट कर दूँ—ऐसा विचार कर जीर्णोद्यान में आया हूँ ॥

**राक्षस**—भद्र, चन्दनदास मार डाला तो नहीं गया ?

**पुरुष**—आज मारा जायगा। सम्प्रति उससे बार-बार अमात्य राक्षस का परिवार माँगा जा रहा है। वह मित्रवत्सलता के कारण नहीं सौंप रहा है। तो इस कारण से (मैं) मरने में (अब) विलम्ब नहीं करूँगा।

**राक्षस**—(प्रसन्नतापूर्वक अपने आप) वाह मित्र चन्दनदास, वाह।

हे सज्जन, शरण में आये हुए ( प्राणी ) की रक्षा करने के कारण उत्पन्न शिवि के (यश के) समान तुम्हारे द्वारा मित्र के बिना भी यश सञ्चित किया जा रहा है ॥१८॥

(प्रकट रूप में) भद्र, जाओ शीघ्र अभी विष्णुदास को आग में प्रवेश करने से रोको। मैं भी चन्दनदास को मरने से बचाता हूँ।

**पुरुष**—अच्छा तो किस उपाय से चन्दनदास को मृत्यु से छुड़ायेंगे ?

**राक्षस**—(तलवार खींचकर) पुरुषार्थ करने में एकमात्र परम सहायक इस तलवार के द्वारा। देखो—

---

('शरणं गृहरक्षित्रोर्वधरक्षणयोरपि' इति मेदिनी) आगतः = प्राप्तः तस्य रक्षया = त्राणेन, समुद्भूतम् = उत्पन्नम्, शिवेः = राज्ञः शिवेः, यशः = कीर्तिः, इव = यथा, त्वया = भवता चन्दनदासेन, सुहृदा = मित्रेण मयेत्यर्थः, विना = विना, अपि, यशः = कीर्तिः, निचीयते = उपार्ज्यते। शिविना शरणागतस्य सन्निधावेव स्वविनाशोऽभ्युपगतः त्वया तु मित्रे विदूरे सत्यपि तथाकर्तुं व्यवसितमिति त्वं शिवेरपि अधिकगुणः असीति भावः ॥१८॥

**टिप्पणी—सुहृदा विना**—महाराज शिवि ने एक बार शरण में आये हुए एक कबूतर की रक्षा व्याध से की थी। उन्होंने कबूतर के सामने ही अपना शरीर काटना प्रारम्भ कर दिया था। किन्तु चन्दनदास ने तो अपने मित्र के दूर रहने पर भी उसके लिए अपना विनाश निश्चय कर रखा है। अतः चन्दनदास का यश शिवि के यश से भी महान् है।

इस श्लोक में उपमा तथा व्यतिरेक अलङ्कार की संसृष्टि एवं अनुष्टुप् छन्द है। छन्द का लक्षण—

श्लोके षष्ठं गुरु ज्ञेयं सप्तमं दीर्घमन्ययोः।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥१८॥

निस्त्रिंशोऽयं सजलजलदव्योमसङ्काशमूर्ति-
युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।
सत्त्वोत्कर्षात्समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद्विवशमधुना साहसे मां नियुङ्क्ते ॥ १९ ॥

पुरु०—आर्य, एवं श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितं विपमदशाविपाकनिपतितं साधु न शक्नोमि त्वां निर्णीय प्रतिपत्तुं किं सुगृहीतनामधेया अमात्यराक्षसपादा यूयं दिष्ट्या दृष्टा इति। तत्कुरु मे प्रसादं सन्देहनिर्णयेन। (इति पादयोः पतति) (अज्ज एवं सेट्ठिचन्दणदासजीविदप्पदाणपिसुणिदं विसमदसाविपाकणिपडिदं साधु ण सक्कोमि तुमं णिण्णीअ पडिवत्तुं किं सुगिहीदणामहेआ अमच्चरक्खसपादा तुह्मे दिट्ठिआदिट्ठात्ति। ता करेहि मे पसादं सन्देहणिण्णएण।)

राक्ष०—सोऽहमनुभूतभर्तृवशविनाशः सुहृद्विपत्तिहेतुरनार्यो दुर्गृहीतनामधेयो यथार्थो राक्षसः।

---

**निस्त्रिंशोऽयमिति**—

**अन्वयः**—सजलजलदव्योमसंकाशमूर्तिः, करेण, प्राप्तसख्यः, युद्धश्रद्धापुलकितः, इव, सत्त्वोत्कर्षात्, परैः, समरनिकषे, दृष्टसारः, अयम्, मे, निस्त्रिंशः, अधुना, मित्र-स्नेहात्, विवशम्, माम्, साहसे, नियुङ्क्ते ॥१९॥

**शब्दार्थः**—सजलजलदव्योमसंकाशमूर्तिः = जल से भरे हुए बादल और आकाश के समान आकृतिवाली, करेण = हाथ के साथ, प्राप्तसख्यः = मित्रता प्राप्त करनेवाली (अर्थात् मेरे हाथ में रहने की अभ्यस्त), युद्धश्रद्धापुलकितः = युद्ध की अभिलाषा से रोमाञ्चित, इव = सी; सत्त्वोत्कर्षात् = बल की अधिकता के कारण, परैः = शत्रुओं के द्वारा, समरनिकषे = संग्रामरूपी कसौटी पर, दृष्टसारः = देखी गयी शक्तिवाली (अर्थात् खरी उतरनेवाली), अयम् = यह, मे = मेरी, निस्त्रिंशः = तलवार, अधुना = सम्प्रति, मित्रस्नेहात् = मित्र के प्रेम के कारण, विवशम् = विवशे, माम् = मुझ को, साहसे = साहस के कार्य में (युद्ध में), नियुङ्क्ते = नियुक्त कर रही है ॥१८॥

**टीका—निस्त्रिंशोऽयमिति।** सजलजलदव्योमसंकाशमूर्तिः—जलेन=सलिलेन सहितः= युक्तः यः जलदश्च = जलवर्षी मेघश्च व्योम च = आकाशश्चेति सजलजलदव्योमनी ताभ्यां संकाशा = सवर्णा मूर्तिः = आकृतिः यस्य तादृशः, नीलः निर्मलश्चेत्यर्थः, करेण = हस्तेन, ममेति शेषः, प्राप्तसख्यः—प्राप्तम् = कृतम् सख्यम् = मैत्री येन तादृशः, युद्धश्रद्धापुलकितः—युद्धे = संग्रामे या श्रद्धा = अभिलाषा तया पुलकितः इव = रोमाञ्चितः इव, धाराजलकणिकासु पुलकसादृश्यस्योत्प्रेक्षा, सत्त्वोत्कर्षात्—सत्त्वस्य = बलस्य ('सत्त्वं गुणे पिशाचादौ बले' इति मेदिनी) उत्कर्षात् = आधिक्यात्, परैः = शत्रुभिः, समरनिकषे—समरः = संग्रामः एव निकषः = शाणः ('शाणस्तु निकषः कषः' इत्यमरः) तस्मिन्, दृष्टसारः—दृष्टः = अवलोकितः सारः = शक्तिः यस्य तादृशः, अयम् = एषः, मे = मम, निस्त्रिंशः = खड्गः, अधुना = सम्प्रति, मित्रविपत्तावित्यर्थः,

जल से भरे हुए बादल और (स्वच्छ) आकाश के समान (नीली) आकृतिवाली, हाथ के साथ मित्रता प्राप्त करनेवाली (अर्थात् मेरे हाथ में सर्वदा रहने की अभ्यस्त), युद्ध करने की अभिलाषा से रोमाञ्चित-सी, बल की अधिकता के कारण शत्रुओं के द्वारा संग्रामरूपी कसौटी पर देखी गयी शक्तिवाली अर्थात् संग्रामरूपी कसौटी पर खरी उतरनेवाली), यह मेरी तलवार सम्प्रति मित्र के प्रेम के कारण विवश मुझको साहस के कार्य में (अर्थात् युद्ध में) नियुक्त कर रही है ॥१९॥

**पुरुष**—आर्य, इस प्रकार सेठ चन्दनदास को जीवन प्रदान करने (के वादे) से सूचित, बुरी अवस्था के परिणाम में फँसे हुए आपको निर्णय करके भलीभाँति पहचानने में समर्थ नहीं हो पा रहा हूँ (कि) क्या सौभाग्यवश (मेरे द्वारा) प्रातःस्मरणीय नामवाले आप श्रद्धेय अमात्य राक्षस देखे जा रहे हैं ? तो (आप इस) सन्देह के निर्णय से हमारे ऊपर कृपा करें (अर्थात् हमारे ऊपर कृपा करके इस शङ्का का समाधान करें)। (ऐसा कह कर चरणों पर गिरता है।)

**राक्षस**—(हाँ) स्वामी (नन्द) के वंश के विनाश का अनुभव करनेवाला, मित्र (चन्दनदास) की विपत्ति का कारण, अमङ्गलकारक है प्रातःकाल नामस्मरण जिसका ऐसा वही मैं सचमुच राक्षस (पिशाच) हूँ।

---

मित्रस्य = सुहृदः चन्दनदासस्येत्यर्थः, स्नेहात् = प्रेम्णः, विवशम् = कार्याकार्यविचार-विमुखमित्यर्थः, माम् = राक्षसम्, साहसे = बलकर्मणि, युद्धे इत्यर्थः, नियुङ्क्ते = व्यापारयति। युद्धेनैव चन्दनदासं मरणान्मोचयामीति भावः ॥१९॥

**टिप्पणी**—**निस्त्रिंशः**—निर् + त्रिंशत् + डच् + विभक्तिकार्यम्।

**सजलजलदव्योम०**—तलवार जलभरे बादल के समान नीली तथा आकाश के समान स्वच्छ है।

**नियुङ्क्ते**—नि + √युज् + लट् ते।

इस श्लोक में उपमा उत्प्रेक्षा तथा रूपक अलङ्कार एवं मन्दाक्रान्ता छन्द है। छन्द का लक्षण—

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥१९॥

**शब्दार्थः**—श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितम् = सेठ चन्दनदास को जीवन प्रदान करने (के वादे) से सूचित, विषमदशाविपाकनिपतितम् = बुरी अवस्था के परिणाम में फँसे हुए, निर्णीय = निश्चित करके, ठीक-ठीक, पतिपत्तुम् = पहचानने में, दिष्ट्या = सौभाग्यवश। अनुभूतभर्तृवंशविनाशः = स्वामी (नन्द) के वंश के विनाश का अनुभव करनेवाला, सुहृद्विपत्तिहेतुः = मित्र (चन्दनदास) की विपत्ति का कारण, दुर्गृहीतनामधेयः = अमङ्गलकारक है प्रातःकाल नामस्मरण जिसका ऐसा, यथार्थः = सचमुच ॥

**टीका**—श्रेष्ठिचन्दनदासजीवितप्रदानपिशुनितम्—श्रेष्ठिनः = वणिजः चन्दनदासस्य जीवितस्य=जीवनस्य प्रदानेन=दानेन, दानेच्छयेत्यर्थः, पिशुनितम्=सूचितम्, विषमदशा-

पुरु०—( सहर्षं पुनः पादयो पतित्वा ) आश्चर्यं दिष्ट्या दृष्टोऽसि । ( ही हीमाणहे दिट्ठिआ दिट्ठोसि । )

राक्ष०—भद्र, उत्तिष्ठोत्तिष्ठ अलमिदानीं कालहरणेन । निवेद्यतां विष्णुदासाय एप राक्षसश्चन्दनदासं मरणान्मोचयतीति । ( इति निस्त्रिंशोयमिति पठन्नाकृष्टखड्गः परिक्रामति )

पुरु०—( पादयोर्निपत्य ) प्रसीदन्त्वमात्यपादाः । अस्ति तावदत्र प्रथमं चन्द्रगुप्तहतकेनार्यशकटदासो वध्यस्थानमाज्ञप्तः । स च वध्यस्थानात्केनाप्यपहृत्य देशान्तरं नीतः । ततश्चन्द्रगुप्तहतकेन कस्मादेप प्रमादः कृत इति आर्यशकटदासे समुज्ज्वलितः कोपवह्निर्घातकजननिधनेन निर्वापितः । ततः प्रभृति घातका यं कमपि गृहीतशस्त्रमपूर्वं पुरुषं पृष्ठतो वाऽग्रतो वा प्रेक्षन्ते तदात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता वध्यस्थाने वध्यं व्यापादयन्ति । तस्मादेवं गृहीतशस्त्रैरमात्यपादैर्गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भवति । ( निष्क्रान्तः ) ( पसीदन्दु अमच्चपादा । अत्थि दाव एत्थ पढमं चन्दउत्तहदएण अज्जसअडदासो वज्झट्ठाणं आणत्तो । सो अ वज्झट्ठाणादो केणवि अवहरिअ देसन्तरं णीदो । तदो चन्दउत्तहदएण कीस एसो प्पमादो किदोत्ति अज्जसअडदासे समुज्जलिदो कोववह्नी घादअजणणिहणेण णिव्वाविदो । तदो पहुदि घादआ जं कंवि गिहिदसत्थं अपुव्वं पिट्ठदो वा अग्गदो वा पेक्खन्ति तदो अत्तणो जीविदं परिरक्खन्तो अप्पमत्ता वज्झट्ठाणे वज्झं वावादेन्ति । ता एवं गिहिदसत्थेहिं अमच्चपादेहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तवराइदो होदि । )

राक्ष०—( स्वगतम् ) अहो दुर्बोधश्चाणक्यवटोर्नीतिमार्गः । कुतः ?—

यदि च शकटो नीतः शत्रोर्मतेन ममान्तिकं
किमिति निहतस्तेन क्रोधावेशाद्वधाधिकृतो जनः ।
अथ न कृतकं तादृक्कष्टं कथं नु विभावयेद्
इति मम मतिस्तर्कारूढा न पश्यति निश्चयम् ॥ २० ॥

---

विपाकनिपतितम्—विषमा = विपरीता या दशा = अवस्था तस्याः विपाकः = परिणामः तत्र निपतितम् = निमग्नम्, निर्णीय = निश्चित्य, प्रतिपत्तुम् = ज्ञातुम्, दिष्ट्या = सौभाग्येन । अनुभूतभर्तृवंशविनाशः—अनुभूतः = दृष्टः भर्तुः = स्वामिनः वंशस्य = कुलस्य विनाशः = क्षयः येन तादृशः, सुहृद्विपत्तिहेतुः—सुहृदः = मित्रस्य विपत्तेः = दुःखस्य हेतुः = कारणभूतः, दुर्गृहीतनामधेयः = प्रातःकाले यस्य नामस्मरणेन अमङ्गलं जायते तादृशः, यथार्थः = वस्तुतः, अन्वर्थना मा इत्यर्थः ॥

**शब्दार्थः**—अपहृत्य = भगाकर । प्रमादः = असावधानी । निर्वापितः = बुझाया गया, शान्त किया गया । अप्रमत्ताः = सावधान, तत्पर । त्वरायितः = शीघ्रता में होनेवाला, शीघ्र ॥

**टीका**—अपहृत्य = बलादादाय । प्रमादः = अनवधानता । निर्वापितः = शमितः । अप्रमत्ताः = सावधानाः । त्वरायितः = झटिति सम्पादितः ॥

**टिप्पणी**—चन्द्रगुप्तहतकेनार्यशकटदासः—चन्द्रगुप्त को हतक और चन्दनदास को

**पुरुष**—(प्रसन्नतापूर्वक फिर चरणों पर गिरकर) आश्चर्य है, सौभाग्य से आप दिखाई पड़े हैं।

**राक्षस**—भद्र, उठो-उठो, इस समय, समय व्यतीत करना व्यर्थ है। विष्णुदास से (जाकर) निवेदन करो (कि) राक्षस अभी चन्दनदास को मरने से छुड़ा रहा है। (ऐसा कहकर 'निस्त्रिंशोऽयम्' यह कहता हुआ तलवार हाथ में लिये हुए घूमता है।)

**पुरुष**—(चरणों पर गिरकर) आदरणीय अमात्य प्रसन्न हों। इस नगर में पहले दुष्ट चन्द्रगुप्त के द्वारा आर्य शकटदास फाँसी के स्थान को (ले जाये जाने के लिए) आज्ञा दिये गये (अर्थात् शकटदास को फाँसी के स्थान पर ले जाने की आज्ञा दी गयी)। वह (शकटदास) फाँसी के स्थान से किसी के द्वारा भगाकर देशान्तर को पहुँचा दिया गया। उसके बाद दुष्ट चन्द्रगुप्त के द्वारा—'यह असावधानी किस कारण से की गयी?' ऐसा कहकर आर्य शकटदास पर प्रज्ज्वलित कोपानल जल्लादों के मारने से शान्त किया गया। तभी से जल्लाद शस्त्र लिये हुए जिस किसी अपरिचित व्यक्ति को पीछे अथवा आगे देखते हैं उस समय अपने प्राणों की रक्षा करते हुए (अर्थात् अपने प्राणों की रक्षा के लिए) सावधान होकर फाँसी के स्थान में वध्य को मार डालते हैं। अतः शस्त्र लेकर अमात्य आपके (वहाँ) जाते ही चन्दनदास का वध शीघ्र कर दिया जायगा।

(निकल गया।)

**राक्षस**—( अपने आप ) कष्ट है, दुष्ट चाणक्य की नीति का मार्ग अगम्य है (अर्थात् दुष्ट चाणक्य की नीति को समझना बहुत कठिन है।) क्योंकि—

यदि शत्रु (चन्द्रगुप्त) की अनुमति से शकटदास मेरे पास लाया गया (तो) उस (चन्द्रगुप्त) के द्वारा क्रोध के आवेशवश (शकटदास का) वध करने के लिए नियुक्त व्यक्ति (जल्लाद) क्योंकर मारा गया? यदि (शकटदास का मेरे पास लाया जाना) बनावटी नहीं है ( तब तो ) उस प्रकार के (पत्र लिखना, उस पर मुद्रा लगाना आदि) कुत्सित कार्य को (शकटदास) किस तरह सोच सकता है? इस प्रकार सोच-विचार में संलग्न मेरी बुद्धि (किसी) निर्णय को नहीं कर पा रही है ॥२०॥

---

आर्य कहकर वह पुरुष राक्षस को यह दिखलाकर कि मैं नन्दकुल का पक्षपाती हूँ प्रभावित करना चाहता है।

**जीवितं परिरक्षन्तः**—असावधानी होने पर वध्य भाग सकता है। उसके भाग जाने पर चन्द्रगुप्त जल्लादों को मरवा देगा। अतः वे जल्लाद अपने प्राणों की रक्षा करने के लिए वध्य को शीघ्र खतम कर देते हैं॥

**यदि चेति**—

**अन्वयः**—यदि, शत्रोः, मतेन, शकटः, मम, अन्तिकम्, नीतः; (तर्हि), तेन, क्रोधावेशात्, वधाधिकृतः, जनः, किमिति, निहतः?; अथ, कृतकम्, न, (तदा), तादृक्, कष्टम्, कथं नु, विभावयेत्; इति, तर्कारूढा, मम, मतिः, निश्चयम्, न,

( विचिन्त्य )

नायं निस्त्रिंशकालः प्रथममिह कृते घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्यमत्र ।
औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृते चाति घोरां
व्यापत्तिं ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥ २१ ॥

---

पश्यति ॥२०॥

**शब्दार्थः**—यदि = यदि, शत्रोः = शत्रु की, मतेन = अनुमति से, शकटः = शकटदास, मम = मेरे, अन्तिकम् = पास, नीतः = लाया गया; (तर्हि = तो), तेन = उस (शत्रु चन्द्रगुप्त) के द्वारा, क्रोधावेशात् = क्रोध के आवेश से, वधाधिकृतः = (शकटदास का) वध करने के लिए नियुक्त, जनः = व्यक्ति (जल्लाद), किमिति = क्योंकर, निहतः = मारा गया, अथ = यदि, कृतकम् = (शकटदास का मेरे पास ले जाया जाना) बनावटी, न = नहीं है, (तदा = तब तो), तादृक् = उस प्रकार के, कष्टम् = कष्टकारक कर्म को, कुत्सित कार्य को, कथं नु = किस तरह, विभावयेत = सोच सकता है; इति = इस प्रकार, तर्कारूढा = सोच-विचार में संलग्न, मम = मेरी, मतिः = बुद्धि, निश्चयम् = निर्णय को, न = नहीं, पश्यति = देख पा रही है, कर पा रही है ॥२०॥

**टीका**—यदि चेति । यदि = चेत्, शत्रोः=रिपोश्चन्द्रगुप्तस्येत्यर्थः मतेन = अनुमत्या, शत्रुकपटेनेति भावः, शकटः = शकटदासः, मम = राक्षसस्य, अन्तिकम् = पार्श्वम्, नीतः = प्रापितः; तर्हीति शेषः, क्रोधस्य = कोपस्य आवेशात् = प्रभावादित्यर्थः, वधे = विनाशने, मारणे इत्यर्थः, अधिकृतः = नियुक्तः, जनः = व्यक्तिः, अत्र जातावेकवचन-मन्यथाऽनुपपत्तिर्घातकानां द्वित्वात्, किमिति = किमर्थम्, निहतः = व्यापादितः; अथ = यदि तस्य मम समीपे प्रापणं कृतकम् = कृत्रिमम्, शाठ्यकल्पितमिति यावत्, न = नास्ति, तदा तादृक् कष्टम् = कुत्सितं कर्म (शत्रवे पत्रलेखनं प्रेषणादिकञ्च), कथन्नु = केन प्रकारेण, विभावयेत् = चिन्तयेत्, आचरेदित्यर्थः, चिन्तनमपि तस्यानुचितं किमाचरणमिति भावः । इति = इत्थम्, तर्के = पक्षापरपक्षयोर्विचारे आरूढा = संलग्ना, मम = राक्षसस्य, मतिः = बुद्धिः, निश्चयम् = निर्णयम्, न पश्यति = नावलोकयति, न कर्तुं पारयतीत्यर्थः ॥२०॥

**टिप्पणी**—**निहतः**—नि + √हन् + क्त + विभक्तिकार्यम् ।

इस श्लोक में काव्यलिङ्ग अलङ्कार तथा शिखरिणी छन्द है । छन्द का लक्षण—

रसै रुद्रैश्छिन्ना यमनसभलागाः शिखरिणी ॥२०॥

**नायमिति**—

**अन्वयः**—इह, प्रथमम्, घातकानाम्, विघाते, कृते, अयम्, निस्त्रिंशकालः, न; नीतिः, कालान्तरेण, फलम्, प्रकटयति, (अतः), तया, अत्र, किम्, कार्यम्, प्रियसुहृदि, मत्कृते, अतिघोराम्, व्यापत्तिम्, गते, औदासीन्यम्, न, युक्तम्, (आम्), ज्ञातम्, अहम्, इमाम्, स्वतनुम्, अस्य, निष्क्रयम्, कल्पयामि ॥२१॥

